अथ चतुर्विंशतिद्वारेषु गाथाद्वयेन शरीरादिस्वरूपवक्तव्यमाह–

**संखित्तयरी उ इमा, सरीरमोगाहणा य सङ्घयणा ।**
**सन्नासंठाणकसाय, लेसिन्दियदुसमुग्घाया ॥ ३ ॥**

**दिट्ठीदंसणनाणे, जोगुवओगोववायचवणठिई ।**
**पज्जत्तिकिमाहारे, सन्निगइआगई वेए ॥ ४ ॥**

(अव०)गाथाद्वयं लघुसंग्रहणीसत्कमिहैषामेव पदानां विचारणीयत्वात् पट्त्रिंशिकायां लिखितम्, व्याख्यालेशश्च यथा–स्वाभाविकशरीरं च पञ्चधा,औदारिकवैक्रियाहारकतैजसकार्मणभेदात् ।१। एषां चावगाहनोच्छ्रयमानं जघन्यमध्यमोत्कृष्टभेदात् त्रिधा ।२। कार्मग्रन्थिकाभिप्रायेण अस्थिरचनाविशेषः संहननं तच्च षोढा–वज्रऋषभनाराच १ ऋषभनाराच २ नाराच३अर्धनाराच ४ कीलिका ५ सेवार्त्तं ६ भेदात्, संहननादिलक्षणं तल्लक्षणशास्त्रादवसेयम् ।३। संज्ञा चतस्रः––आहार–भय–परिग्रह–मैथुनलक्षणाः, दश वा एतास्ते च चतुष्कषायसंज्ञा ४ लोकसंज्ञा १ ओघसंज्ञा २ क्षेपात् ।४। समचतुरस्र १ न्यग्रोध २ सादि ३ वामन ४ कुब्ज ५ हुंडक ६ भेदानि संस्थानानि ।५। कषायाश्चत्वारः । ६ । लेश्याः षट्–कृष्ण १ नील २ कापोत ३ तैजस ४ पद्म ५ शुक्ल ६ रूपाः परमत्र ता द्रव्यरूपा अवस्थिता विचार्याः, न भावरूपाः ।७। इन्द्रियाणि पञ्च ।८। द्वौ समुद्घातौ–समवहननमात्मप्रदेशविकरणं समुद्घातः स चाजीवविषयोऽचित्तमहास्कन्धरूपः, नोजीवविषयः सप्तधा, "वेयण १ कसाय २ मरणे ३, वेउव्विय ४ तेउए य ५ आहारे ६ । केवलिए चेव भवे,जीवमणुस्साण सत्तेव ॥१॥"त्ति।९। दृष्टिस्त्रिधा-मिथ्यात्वसास्वादनमिश्रभेदात्।१०।दर्शनं-चक्षुरचक्षुरवधिकेवलभेदाच्चतुर्विधम्।११।ज्ञानं

मतिश्रुतावधिमनःपर्यायकेवलभेदात् पञ्चधा ।१२। अत्र ज्ञानसाहचर्यादनुक्तमप्यज्ञानं ग्राह्यम् । तच्च त्रिधा, मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानरूपम् । १३ । योगाः पञ्चदश, मनोयोगश्चतुर्धा वाग्योगश्चतुर्धा, औदारिको १ दारिकमिश्र २ वैक्रिय ३ वैक्रियमिश्रा ४ हारका- ५ हारकमिश्र ६ तैजसकार्मणरूप ७ सप्तधा काययोगभेदेन ।१४। उपयोगो द्विधा, तत्र ज्ञानाज्ञानभेदाष्टकरूपः साकारोपयोगः, चतुर्भेददर्शनरूपोऽनाकारोपयोगः,संयोगे द्वादश ।१६। एकसमये उत्पद्यमानानां च्यवमानानां सङ्ख्येनि द्वारद्वयं ।१६। ।१७। स्थितिरायुषो जघन्योत्कृष्टमानं ।१८। आहारादिग्रहणशक्तयः पर्याप्तयस्ताश्चषट् आहार १ शरीरे २ न्द्रिय ३ श्वासोच्छ्वास ४ भाषा ५ मनः ६ स्वरूपाः ।१९। के जीवाः कतिभ्यो दिग्भ्य आगतमाहारद्रव्यमाहारयन्तीति किमाहारद्वारं ।२०। विशिष्टाः संज्ञास्तिस्रः । यया त्रिकालमर्थं जानाति सा दीर्घकालिकी संज्ञा मनस्कानामेव १, यश्च देहपालनाहेतोरिष्टवस्तुषु प्रवर्त्तते अहिताच्च निवर्त्तते वर्त्तमानकालविषयं च चिन्तनं यस्य तस्य हेतुवादोपदेशसंज्ञा द्वीन्द्रियादीनामेव २, यश्च सम्यग्दृष्टिः क्षायोपशमिकज्ञानयुक्तो यथाशक्ति रागादिनिग्रहपरस्तस्य दृष्टिवादोपदेशिकी संज्ञा ३ ।२१। गतिर्भवान्तरगमनं ।२२। आगतिः परभवात्, ।२३। वेदश्च स्त्रीपुंनपुंसकभेदात् ।२४। ॥३–४॥ अथैतानि द्वाराणि २४ दंडकेऽवतारयति–

(टीका)--सङ्खित्त० दिट्ठी० गाथाद्वयस्य व्याख्यानं सुकरमपि तु पुनः किमपि क्रियते–मयेति कर्तृपदं बहिर्गम्यं । संक्षिप्ततरा तु संग्रहणी इयं शरीरादिचतुर्विंशतिद्वारात्मिका । तत्र शरीराणि पञ्च औदारिकादीनि । शीर्य्यते इति शरीरः विनाशकारित्वात् ( विनाशित्वात ) । पुंक्लीबलिङ्गः । अवगाहन्ते अवतिष्ठन्ते जीवा अस्यामिति अवगाहना । संहन्यन्ते दृढीकि-

यन्ते शरीरपुद्गला येन तत् अथवा संहन्यन्ते संहति-विशेषं प्राप्यन्ते शरीरावस्थावयवा यैस्तानि संहननानि। तानि (च) वज्रर्षभनाराचादिभेदात् षोढा। संस्थानं द्वेधा, जीवानां अजीवानां च। संतिष्ठन्ते प्राणिनोऽनेनाकारविशेषेणेति संस्थानं तच्च षोढा समचतुरस्रन्यग्रोधसादिवामनकुब्जहुंडभेदैः संस्थानानि भवन्ति। द्वितीयं तु अजीवानां रूपिणां पञ्चधा संस्थानं यथा,-परिमण्डलं वृत्तं त्र्यस्रं चतुरस्रमायतं च। इह तु जीवानां संस्थाने (न) प्रयोजनमित्यर्थः। संज्ञाश्चतुर्धा दशधा वा भवन्ति। चत्वारः प्रकारा यासां ताः। अथवा दश प्रकारा यासां ताः। यथा-आहारभयपरिग्रहमैथुनभेदाच्चतुर्धा। (पूर्वोक्तभेदचतुष्क) क्रोधमानमायालोभओघलोकभेदाच्चेति दश संज्ञाः स्युरित्यर्थः। तथा ग्रन्थान्तरोक्ताः सुखदुःखमोहधर्मरूपाश्चतस्रः एतास्वेवान्तर्भवन्ति इत्यर्थः (अनया) संजानातीति संज्ञा। कष्यन्ते हिंस्यन्ते प्राणिनोऽस्मिन्निति कषः संसारस्तस्यायो लाभो येभ्यस्ते कषायाः क्रोधाद्यश्चत्वारोऽप्यनन्तानुबन्ध्यादिभेदेन षोडश भवन्ति। लेश्याः कृष्णाद्याः षोढा स्युः। लिश्यते -श्लिष्यते कर्मणा सह जीवः आभिरिति लेश्याः। यदुक्तं—

"कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः। स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्तते" ॥ १ ॥ कृष्णानीलकापो-

ततेजःपद्मशुक्लरूपाः,परमत्र ता द्रव्यरूपा अवस्थिता विचार्या न भावरूपाः। इन्द्रियं श्रोत्रादिभेदात् पञ्चधा। दुसमुग्घायेति० द्वौ समुद्घातौ जीवाजीवसम्बन्धिनौ भवतः। तत्राद्यं जीवसमुद्घातमाह-तथाहि-सम्यक् आत्मनो वेदनादिभिरेकीभावेन उत्प्राबल्येन घातः समुद्घातः। स च सप्तधा, यथा-वेदनाकषायमरणवैक्रियेत्यादि। वेदनादीनां षण्णां मानमन्तर्मुहूर्तं स्यात् सप्तमस्तु केवलिसमुद्घातो दण्डादिना लोकव्यापी, दण्डादि क्रमेण सकललोकस्य पूरणात, कालतोऽष्टसामयिकः। द्वितीयस्तु समुद्घातोऽचित्तमहास्कन्धरूपः; स च केवलिसमुद्घातवत अष्टसामयिकः परमितानधिकारान्नोक्तं। दिट्ठी० दृष्टिस्त्रिधा, यथा सम्यग्दृष्टिः १, मिथ्यादृष्टिः २, सम्यग्मिथ्यादृष्टिः ३ (च)।

दर्शनानि चत्वारि भवन्ति; यथा– चक्षुर्दर्शनं अचक्षुर्दर्शनमव· धिदर्शनं केवलदर्शनं ( च ) घटपटादिपदार्थसार्थसामान्याकारपरिज्ञानं ज्ञातव्यं । पदार्थविशेषाकारपरिज्ञानं पुनर्ज्ञानं ज्ञातव्यम् । अयमेव ज्ञानदर्शनयोर्भेदः । पञ्च ज्ञानानि भवन्ति । यथा पञ्चभिरिन्द्रियैः षष्ठेन मनसा जीवस्य यत् ज्ञानं स्यात् तन्मतिज्ञानं । श्रुतं द्विधा भवति । द्रव्यश्रुतं भावश्रुतं च, यथा–द्रव्यश्रुतं द्वादशाङ्गीरूपं, भावश्रुतं द्वादशाङ्गीसमुत्पन्नोपयोगरूपं । अवधिज्ञानं द्विप्रकारं–भवहेतुकं श्राद्धसाधुतिरश्चां ( गुण· हेतुकं ) च । मनःपर्यायज्ञानं सार्धद्वौ (द्वय) द्वीपसमुद्रस्थितसंज्ञिपञ्चेन्द्रियमनोविषयं द्विभेदं ऋजुमतिविपुलमतिरूपं साधूनामेव भवति । केवलज्ञानं घनघातिकर्मचतुष्टयक्षयसमुत्पन्नं सकललोकालोकविषयं । ज्ञानसाहचर्यादज्ञाप्यनु(ज्ञानु)क्रमपि त्रिधाऽज्ञानं, यथा–मत्यज्ञानं श्रुताज्ञानं विभङ्गज्ञानं । सप्त द्वीपसमुद्रान् यावत् विभङ्गज्ञानं तु पश्यति मिथ्यादृष्टीनामेव त्रीण्यज्ञानानि भवन्ति । एतत्सूत्रे नोक्तं बहिर्गम्यं । वाचां मनसां चाग्रतो वक्ष्यमाणाः प्रत्येकं चतुर्धा ( चत्वारो ) योगाः । तथा कायानां योगाः सप्तधा (सप्त सर्वमीलनेन पञ्चदश योगाः स्युरित्यर्थः। उपयोगो द्विधा–तत्र ज्ञानाज्ञानभेदाष्टकरूपाः साकारोपयोगाः ( इतरे ) चत्वारः, यथा– चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनरूपाः । संयोगे एवं द्वादश उपयोगाः स्युरित्यर्थः। उत्पद्यन्ते ( एपत्तिः ) उपपातः । च्यवन्ते चेति (च्युतिः) च्यवनं। जीवानां उपपातच्यवनयोरिहापि सम्बन्धादुपपातच्यवनविषययोर्विरहकाललक्षणं–अपान्तरालकाललक्षणमेकसमयसङ्ख्या चेति गृह्यते इत्यध्याहारः । तिष्ठन्ति नरकादिभवे श‍ृङ्खलाबद्धा इव जन्तवः पाप(पुण्य)कर्मपरिणत्या स्थितिरायुर्जीवितमित्येकार्थाः। 'पज्जत्तित्ति' आहारादीनामत्र निर्वृत्तिर्निष्पत्तिर्यतो दलिकाद्–दलभूतात्पुद्गलसमुहाद् भवति तस्य दलिकस्य तामेवाहाराद्यभिनिर्वृत्तिं स्वस्वविषयपरिणमनरूपां प्रति यत् करणं जीवसम्बन्धिशक्तिरूपं सो पर्याप्तिः । ताश्च षोढा आहुः, यथा—आहारशरीरेन्द्रियश्वासोच्छ्वासभाषामनःस्वरूपाः । किमाहारेति० किमाहारकोऽनाहारको वा जीवः ? यद्वा किंस्वरूपः सचित्तादि-

आहारकः ? केन वा शरीरेणाहारोऽस्येति किमाहारः ? । आहरणं आहारः । सन्नोत्ति० विशिष्टा संज्ञास्तिस्रः । यया त्रिकालविषयमर्थं जानाति सा दीर्घकालिकी(क्ये)वसमनस्कानामेव । यश्च स्वदेहपालनहेतोरिष्टवस्तुषु प्रवर्तते अहिताच्च निवर्तते वर्तमानकालविषयं च चेतनं ज्ञानं यस्य तस्य हेतुवादोपदेशिकीसंज्ञा द्वीन्द्रियादीनामेव । यश्च सम्यग्दृष्टिः क्षायोपशमिकज्ञानयुक्तो यथाशक्तिहेयोपादेयनिग्रहपरस्तस्य दृष्टिवादोपदेशिकीसंज्ञा छद्मस्थसम्यग्दृशामेव इति संज्ञात्रिकमवमन्तव्यं । गमनं गतिः । आगमनमागतिः । अथ वेदत्रयमाह—पुंवेदः स्त्रीवेदः नपुंसकवेदः । प्रज्ञापनादिषु विस्तरेणाभिहिता अर्थाः ततः संक्षिप्य गृह्यन्ते प्रतिपाद्यन्तेऽभिधीयन्ते वाऽस्यामिति ग्रहेरणिरित्यौणादिके अणिप्रत्यये ङीप्रत्यये च सङ्ग्रहणीति निष्पन्नं । संक्षेपतो द्वारगाथाद्वयस्य व्याख्यानं कृतमित्यर्थः । अत्र चकारः समुच्चयार्थः ॥ ३ ॥ ४ ॥

अथ चतुर्विंशतिदण्डकेषु चतुर्विंशतिद्वाराणि निरूपयन्नाह—

**चउ गब्भतिरियवाउसु, मणुआणं पंच सेस तिसरीरा ।**
**थावर चउगे दुहओ, अंगुलअसंखभागतणू ॥ ५ ॥**

( अव० ) 'दुव्वयणे बहुवयण' मिति प्राकृतलक्षणेन गर्भजतिर्यक्वाय्वोश्चत्वारि शरीराणि सम्भवन्ति, सम्भवश्च न भवन्त्येवेति निश्चयः, एवं सर्वत्रापि ज्ञेयम् । आहारकत्यागेन कयोश्चित्तयोर्वैक्रियकरणेन चतुर्णां सम्भवः, मनुष्याणां पञ्चापि । शेषा दण्डकास्त्रिशरीरा औदारिकयुक्ताभ्यां च तैजसकार्मणाभ्यां । १ । स्थावरचतुष्के पृथिव्यप्तेजोवायुरूपे 'दुहतोत्ति' द्वाभ्यां प्रकाराभ्यां जघन्योत्कृष्टरूपाभ्यां अङ्गुलासंख्येयभागानि शरीराणि, यद्यपि बादराणां वानाग्न्यप्पृथिवीनां शरीराणि मिथोऽङ्गुलासङ्ख्येयगुणवृद्धानि तथापि यथोक्तमानान्येव ॥ ५ ॥

(टीका)—चउगब्भेत्ति० गर्भजतिर्यग्वाय्वोश्चत्वारि औदारिक-वैक्रियतैजसकार्मणलक्षणानि शरीराणि भवन्ति, भवन्तीत्यध्या-हारः । "दुव्वयणे बहुवयणमिति" प्राकृतलक्षणेन (द्वित्वेऽपि बहुवचनं) गर्भजतिर्यग्वाय्वोश्चत्वारि शरीराणि सम्भवन्ति, संभव एव न निश्चयेन । आहारकत्यागेन वैक्रियकरणेन च चतु-र्णां संभवः। 'मणुआणं पञ्चेति०' मनुष्याणां पञ्च औदारिकवै-क्रियआहारकतैजसकार्मणलक्षणाः शरीराः स्युः । सेसेति० शेषेषु दण्डकेषु त्रीणि शरीराणि भवन्ति, तान् दण्डकान् विस्तरेणाह—त्रयोदश देवानां सप्तपृथिवीभेदेनैकः नैरयिकाणां सर्वमीलनेन चतुर्दश दण्डकाः जातास्तेषु त्रयो वैक्रियतैजसकार्मणलक्षणाः शरीरा भवन्ति । तथा पृथिव्यप्तेजोवनस्पतीनां चत्वारः पञ्चमो द्वीन्द्रियाणां षष्ठस्त्रीन्द्रियाणां सर्वमीलनेन सप्त दण्डका जाता-स्तेषु त्रीणि औदारिकतैजसकार्मणलक्षणानि भवन्ति । सर्वमील-नेनैकविंशतिर्दण्डका जातास्तेषु त्रीणि शरीराणि भवन्ति इत्ययं भावः । प्रथमं शरीरद्वारं व्याख्यातं । अथावगाहनाद्वारमाह—थावरेति० वनस्पतिं मुक्त्वा स्थावरचतुष्केषु शरीरं द्विधा, यथा जघन्यतः उत्कृष्टतश्चाङ्गुलासङ्ख्येयभागप्रमाणं शरीरं स्यात्, अङ्गुलासंख्यातभागवपुर्मानं स्यादित्यर्थः, परं जघन्यापेक्षया उत्कृष्टमसङ्ख्येयगुणमित्यर्थः ॥ ५ ॥

**सव्वेसिंपि जहन्ना, साहाविय अंगुलस्ससंखंसो ।**
**उक्कोस पणसयधणू, नेरइया सत्तहत्थ सुरा ॥६॥**

(अव०)शेषाणां सर्वेषां विंशतिदण्डकजीवानां स्वाभाविकस्य मौलस्य शरीरस्य जघन्यावगाहना अङ्गुलस्यासङ्ख्यातो भागः । उत्कृष्टतः पञ्चशतधनुरुच्चा नैरयिकाः, सुराः सप्तहस्तोच्चाः ॥ ६ ॥

(टीका)—सव्वेसिंपि जहन्नेति० पृथिव्यप्तेजोवायून स्थावर-चतुष्कान् सत्यज्य विहाय सर्वेषामपि विंशतिदण्डकानां स्वभा-वतो जघन्याङ्गुलासंख्यातभागतनु स्यात् । सर्वनिकृष्टं वपुर्मानं स्यादित्यर्थः । अथ उत्कृष्टदेहमानमाह उक्कोस पणसयेति०

सप्तम्यां माघवत्याख्यायां नरकपृथिव्यां धनुःपञ्चशतप्रमाणवपुषः पञ्चशतकोदण्डशरीरमानाः नैरयिकाः जीवाः स्युः, स्युरित्यध्याहारः । ततोऽर्द्धो( र्धार्धो )ना ज्ञेया रत्नप्रभां यावत् । सौधर्मेशानयोर्देवानां तथा भवनपतिव्यन्तरज्योतिष्काणां तूच्चत्वं वपुःप्रमाणं उत्कृष्टतः सप्त हस्ताः ज्ञेयाः, सप्त रत्नयो भवन्ति इत्यर्थः, "बद्धमुष्टिरसौ रत्निः" इति वचनात् ॥ ६ ॥

**गब्भतिरि सहसजोयण,वणस्सई अहियजोयणसहस्सं ।**
**नरतेइंदि तिगाऊ, बेइंदिय जोयणे बार ॥७॥**
**जोयणमेगं चउरिं–दिदेहमुच्चत्तणं सुए भणिअं ।**
**वेउव्वियदेहं पुण, अंगुलसंखं समारंभे ॥ ८ ॥**

(अव०) गर्भजतिरश्चां मत्स्यादीनां योजनसहस्रं, वनस्पतेः साधिकयोजनसहस्रं तदूर्ध्वं तु पृथ्वीविकारः । नरास्त्रीन्द्रियाश्च त्रिगव्यूतोच्चाः । द्वीन्द्रिया ' जोयणे बारत्ति ' द्वादशयोजनोच्छ्रयाः। चतुरिन्द्रियदेहमुच्चत्वेन योजनमेकं । श्रुते प्रज्ञापनादौ भणितमुक्तं प्रस्तावादाह–वैक्रियदेहं पुनः प्रारम्भेऽङ्गुलसङ्ख्यातभागमानं,उत्कृष्टं ' देवनरअहियलक्खंति ' द्वा० ॥ ८ ॥

(टीका)—गब्भतिरिसहसेति० मत्स्योरगादयो गर्भजास्तिर्यञ्चः सहस्रयोजनमानाः-सहस्रयोजनप्रमाणा भवन्ति भवन्तीत्यध्याहारः । वणस्सेति० प्रत्येकवनस्पतीनां मागरादिगतपद्मनालादीनां शरीरं देहमानं किञ्चिदधिकं योजनसहस्रमुच्चत्वं स्यात । ननु शरीरमानं उत्सेधांगुलेन समुद्रपद्मह्रदादीनां प्रमाणांगुलयोजनयोजनसहस्रावगाहत्वात् तद्गतपद्मनालादीनां तु उत्सेधांगुलापेक्षयात्यन्तदैर्घ्यं स्यात् ? अत आह– उत्सेधांगुलयोः सहस्रमाने जलाशये गोतीर्थादिस्थाने वनस्पतेः साधिकं योजनसहस्रं, तदूर्ध्वं तु पृथिवीविकार इत्यर्थः । नरतेइन्ति० श्रुते सिद्धान्ते नराणां मनुष्याणां त्रीन्द्रियाणां कर्णशृगालिकादीनां क्रोशत्रिकं देहो-

च्चत्वं भणितं कथितं अहतेति कर्तृपदं । गव्यूतित्रयमुच्चत्वं शरीरमानेन नरत्रीन्द्रियौ भवत इत्यर्थः । बेइंदियेति० द्वीन्द्रियाणां शङ्खप्रभृतीनां द्वादशयोजनप्रमाणं देहोच्चत्वं वपुर्मानं स्यादित्यर्थः ॥ ७ ॥ जोयणेति० चतुरिन्द्रियाणां मक्षिकाभ्रमरदंशककंशारिशलभपतङ्गवृश्चिकप्रमुखाणामुत्कृष्टतो योजनमेकं देहमानमुच्चत्वं भणितं कथितं । अत्र खण्डान्वयो ज्ञेयः, गाथात्रयेणावगाहनास्वरूपं व्याख्यातं । अथ पुनर्वैक्रियावगाहनामाह–वेउव्वियेति ,पुनर्वैक्रिय देहस्य प्रारम्भे जघन्यतोऽङ्गुलस्य संख्यांशः संख्येयभागं वपुर्भवति उत्तरवैक्रियशरीरापेक्षया । भवधारणीयं तु अङ्गुलासंख्येयभागं प्रारम्भे ॥ ८ ॥

अथोत्कृष्टां वैक्रियावगाहनामाह—

**देवनर अहियलक्खं, तिरियाणं नव य जोयणसयाइं ।**
**दुगुणं तु नारयाणं, भणियं वेउव्वियसरीरं ॥ ९ ॥**

(अव०) लब्धिवैक्रियशरीरिणो जीवतोऽन्तर्मुहूर्त्तात् तपरो न वैक्रियशरीरेऽवस्थानमस्ति । पुनरौदारिकशरीरस्य अवश्यं प्रतिपत्तेरिति ॥ ९ ॥

( टीका ) देवनरेति० असुरकुमारादिव्यन्तरज्योतिष्कसौधर्माद्यच्युतावसानदेवानां च उत्कृष्टतः सहजशरीरग्रहणोत्तरकालं कार्यमाश्रित्य विविधा क्रियत इति उत्तरवैक्रिया च पुनर्देवानां उत्तरवैक्रियतनोर्योजनानां किञ्चिदधिकं लक्षं । तथा नराणां वैक्रियशरीरं किञ्चिदधिकं योजनलक्षं भणितं कथितं । ग्रैवेयकानुत्तरेषु देवानामुत्तरवैक्रियतनुर्नास्ति, सामर्थ्ये सति कार्याभावात्तदकरणमित्यर्थः । तिरियेति०, अत्र तुशब्दः पुनरर्थे तिरश्चां उत्कृष्टा वैक्रियतनुर्नवयोजनशतप्रमाणा भणिता । तु पुनः नैरयिकाणां स्वस्वाभाविकदेहादुत्तरवैक्रियशरीरं द्विगुणं ज्ञेयं,

यथाऽऽद्यायां रत्नप्रभायां धनुःपञ्चदशकं हस्तद्वयं द्वादशांगुलप्रमाणं । ततो द्वितीयायां धनुष(नूषि) पञ्चत्रिंशद्धस्तमेकं । तृतीयायां द्वाषष्टिर्हस्तद्वयं । तुर्यायां धनुषः(षां) पञ्चविंशत्यधिकं शतं । पञ्चम्यां पञ्चाशदधिकं शतद्वयं नैरयिकाणां देहमानमुच्चत्वेन स्यात । षष्ठ्यां नारकाणां धनुःपञ्चशतानि शरीरं स्यात् । पुनः सप्तम्यां नैरयिकाणामुच्चत्वेन धनुःसहस्रमेकं उत्तरवैक्रियदेहमानं स्यादित्यर्थः । जघन्यतस्तु तदेव नारकाणां द्विविधोऽपि स्वाभाविक उत्तरवैक्रियश्च क्रमादंगुलासंख्यातांशोऽऽङ्गुलसंख्यातांशश्च, जघन्यश्चोत्पत्तिसमय एव नान्यदा ॥ ९ ॥

अथ उत्तरवैक्रियशरीरमानमाह—

**अंतमुहुत्तं निरए,मुहुत्तचत्तारि तिरियमणुएसुं ।**
**देवेसु अद्धमासो, उक्कोस विउव्वणाकालो ॥१०॥**

(अव०) इतिवचनसामर्थ्यात् अन्तर्मुहूर्त्तचतुष्टयं तेषां देशबन्ध इत्युच्यते तन्मनान्तरमित्यवसेयम् । तृतीयसंहननद्वारमाह ॥१०॥

टीका—अन्तमुहुत्तन्ति० नरकस्थजीवानां वैक्रियशरीरस्यान्तर्मुहूर्त्तमुत्कृष्टमानं भवति । तिर्यग्मनुष्ययोर्वैक्रियशरीरस्य चत्वारो मुहूर्त्ताः उत्कृष्टाः स्थितयो भवन्ति (तिर्भवति) इत्यध्याहारः । भवनपत्यादिसौधर्माद्यच्युतान्तदेवानां उत्कृष्टतः उत्तरवैक्रियवपुषोऽर्द्धमासः कालः स्यात्। किञ्चिद्विशेषमाह–देवनैरयिकयोः स्वाभाविकंवैक्रियदेहउत्तरवैक्रियदेहश्च स्यात्,च पुनः तिर्यग्नरयोर्वैक्रियदेह.(अस्वाभाविक.) स्यात्। वायोरस्वाभाविकं स्वाभाविकदेहं स्यात । केषाञ्चिन्मते औदारिकं वैक्रियं च, केषाञ्चिन्मते वैक्रियमेवेत्यनुयोगद्वारसूत्रे प्रोक्तमित्यर्थः । पृथिव्यप्तेजोवनस्पतिषु विकलेन्द्रियेषु च वैक्रियदेहा न स्युरिति भावः । देहशब्दः पुंक्लीबत्वं (च.) । अवगाहनाद्वारं द्वितीयं प्ररूपितं ॥ १० ॥

अथ संहननद्वारं तृतीयमाह—

**थावरसुरनेरइया, असंघयणा य विगलछेवट्ठा ।**

**संघयणछक्कं गब्भय–नरतिरिएसुं मुणेयव्वं ॥ ११ ॥**

(अव०)स्थावरसुरनैरयिकाः संहननरहिताः अस्थ्यभावादेव । चः समुच्चये किं समुच्चिनोति सैद्धान्तिकमतेन सुरा नारकाश्च प्रथमसंहननिनः त्रिकलाः सेवार्त्ता इति अस्थिसम्बन्धमात्रसंहननवन्तः,गर्भजनरतिरश्चोः संहननषट्कं ज्ञातव्यम् । ३ द्वा० ॥ ११ ॥ चतुर्थं संज्ञाद्वारमाह—

टीका—थावरसुरेति० पञ्चानां स्थावराणां, त्रयोदशदेवानां, सप्तपृथिवीभेदेनैकः नारकाणां सर्वमीलनेनैकोनविंशतिर्दण्डका जातास्तेषु दण्डकेषु षडपि संहननानि न सन्ति न ज्ञातव्यानि इत्यर्थः । विकलेन्द्रियाणां द्वित्रिचतुरिन्द्रियाणां संमूर्च्छिमपञ्चेन्द्रियतिर्यग्नराणां च सहननं सेवार्त्तं ज्ञातव्यम् । कार्मग्रन्थिकास्तु संमूर्च्छिमपञ्चेन्द्रियतिरश्चां अपि षडप्याहुः। क्वचिदेकेन्द्रियाणां सेवार्त्तं देवानां च वज्रर्षभनाराचमुक्तं, तदौपचारिकं । तुशब्दार्थे अपिशब्दः, तु पुनः गर्भजतिर्यग्मनुष्ययोः षडपि संहननानि ज्ञातव्यानि । को भावः ? गर्भजतिर्यग्नरेषु षडपि संहननान्याहुः विकलेष्वेकं सेवार्त्तमन्येष्वेकोनविंशतिदण्डकेषु न संहननानि भवन्ति इत्यर्थः । अत्र चकारः समुच्चयार्थः ॥११॥

संहननद्वारं तृतीयं निगमयन्नथ संज्ञाद्वाराभिधित्सया चतुर्थं संज्ञाद्वारं व्याख्यानयति—

**सव्वेसिं चउ दह वा, सन्ना सव्वे सुरा य चउरंसा ।**
**नर तिरि छस्संठाणा, हुंडा विगलिन्दिनेरइआ ॥१२॥**

(अव०)संज्ञा सर्वजीवानां चतस्रो दश वा, केषाञ्चिन्नृणां षोडशापि परमल्पत्वान्न विवक्षितम् । ४द्वा० । पञ्चमं संस्थानद्वारमाह– सर्वे सुराश्च भीमो भीमसेन इतिन्यायेन समचतुरस्रसंस्थानाः। नरतिर्यञ्चौ षट्संस्थानौ त्रिकलेन्द्रियनैरयिका हुण्डसंस्थानाः ॥१२॥ स्थिराणां षड्विधसंस्थानराहित्येऽपि संस्थानानां आकारभेदत्वादेव एतच्छरीराकारानाह—

टीका—सव्वेसिं चउ दहेति० सर्वेषां चतुर्विंशतिदण्डकजीवानां आहारभयमैथुनपरिग्रहलक्षणाश्चतस्रः संज्ञाः स्युः । अथवा दश संज्ञाः स्युः यथा– पूर्वोक्ताश्चतस्रः क्रोधमानमायालोभलोकआघलक्षणाः(णाश्चेति) संज्ञाः दश भवन्ति, भवन्तीत्यध्याहारः । चतुर्थं संज्ञाद्वारं व्याख्यातं । अथ पञ्चमं संस्थानद्वारं प्रोच्यते । सव्वे सुरेति० भवनपत्यादिवैमानिकान्ता देवाः सर्वेऽपि समचतुरस्रसंस्थानाः स्युः, समाश्चतस्रोऽस्रयश्चतुर्दिग्विभागोपलक्षिताः शरीरावयवाः यत्र समा वा चत्वारोऽस्राः कोणाः यत्र ते (तत्) समचतुरस्राः(स्रं) गभजनरा गर्भजतिर्यञ्चश्च तयोः समचतुरस्रन्यग्रोधपरिमण्डलसादिकुब्जवामनहुण्डाख्यानि षडपि संस्थानानि भवन्ति । हुंडा वीति० विकलेन्द्रियाणां नैरयिकाणां स्थावराणां च हुण्डाख्यसंस्थानं स्यात् । हुण्डस्य किं लक्षणं स्यात् ? तदुच्यते । यथा– सर्वावयवेषु अलक्षणं स्यात, शुभाकाररहितं हुण्डं भवति इत्यर्थं ।ननु चतुर्विंशतिदण्डकानां षडपि संस्थानानि प्रोक्तानि, यदि स्थावराणां नानाविधध्वजसूचिबुदबुदार्धमसूरा(आ)कारा वर्तन्ते तर्हि बहूनि संस्थानानि भवन्ति ! प्रोच्यते, अमी भेदा हुण्डान्तर्गता भवन्ति इत्यर्थः ॥ १२ ॥

हुण्डस्य भेदनाह—

**नाणाविह धयसूइ, बुब्बुय वणवाउतेउअपकाया ।**
**पुढवीमसूरचंदा-कारा संठाणओ भणिआ ॥१३॥**

(अव०) नानाविधं, १ ध्वजः पताका, २ सूची, ३ बुद्बुदाकाराणि क्रमेण वनस्पतिवायुतेजोऽप्कायशरीराणि । पृथ्वी अर्द्धमसूराकारा भणिता भगवत्यादौ ॥ १३ ॥ षष्ठं कषायद्वारमाह—

टीका—नाणाविहेति० वनस्पतयो नानाविधसंस्थाना विचित्रसंस्थानाः भणिताः। च पुनः वायवो ध्वजसंस्थाना भणिता । अग्नयः सूचिकलापसंस्थानाः भणिताः प्रोक्ताः । आपः स्तिबुकबिन्दुसंस्थानाः बुद्बुदाकारा भणिता कथिताः पंपोटा इति लोकोक्तिः । पृथिव्यो मसूरवच्चाकारा अर्धमसूराकारा इत्यर्थः ॥ १३ ॥

सव्वेवि चउकसाया, लेसछगं गब्भतिरियमणुएसुं ।
नारयतेऊवाऊ, विगला वेमाणिय तिलेसा ॥१४॥

(अव०) सर्वेपि जीवाः चतुष्कषायवन्तः । निष्कषायाश्च केचन मनुष्येषु । सप्तमं लेश्याद्वारमाह– लेश्याषट्कं गर्भजतिर्यग्मनुष्येषु, नारकतेजोवायुविकला वैमानिकाश्च त्रिलेश्याः प्रथमद्वितीयोः पृथिव्योः कापोता । तृतीयस्यामुपरि कापोता अधो नीला । पंकायां नीला धूमायां नीला कृष्णा च । षष्ठीसप्तम्योः कृष्णा एव । तथा सौधर्मैशानयोस्तेजः कल्पत्रये पद्मा लान्तकादिषु शुक्ला एवेति ॥ १४ ॥

पञ्चमं संस्थानद्वारं संहरन् षष्ठं कषायद्वारं प्रकपयति ॥
टीका- सव्वेवि चउ० इति० केवलिसिद्धजीवान् मुक्त्वा चतुर्विंशतिदण्डकानां जीवेषु चत्वारः कषायाः भवन्ति । षष्ठं कषायद्वारं वर्णितं । अथ सप्तमं लेश्याद्वारं विवृणोति । लेसेति० गर्भजतिर्यग्मनुष्ययोर्लेश्या. षडप्याहुः । च पुनः नारयेति० नैरयिकानां तेजसां वायूनां विकलेन्द्रियाणा च कृष्णाद्यास्तिस्रो लेश्या भवन्ति । वैमानिकानां देवानां तेजआद्यास्तिस्रो लेश्या भवन्ति, भवन्तीत्यध्याहारः ॥ १४ ॥

जोइसिय तेउलेसा, सेसा सव्वेवि हुंति चउलेसा ।
इंदियदारं सुगमं, मणुआणं सत्त समुग्घाया ॥१५॥

(अव०) ज्योतिष्काः केवलतेजोलेश्यावन्तः । शेषाः सर्वेऽपि पृथिव्यब्वनस्पतिभवनपतिव्यन्तराश्चतुर्लेश्या भवन्ति । तेजोलेश्यावतां केषाञ्चिद्देवानां भूजलवनेषूत्पादात् कियत्कालं तल्लेश्यासम्भवः ॥ ७ ॥ इन्द्रियद्वारं सुगमम् । ८ । नवमं समुद्घातद्वारमाह– मनुष्येषु सप्त समुद्घाताः॥ १ सप्तसमुद्घातानां नामान्याह–

टीका—जोइसियेति० तेजोलेश्याका ज्योतिष्काः भवन्ति । आद्यपदं व्याख्यातं । गाथाद्वितीयपादस्य व्याख्यानमाह-सेसा सव्वेवित्ति० शेषाः सर्वेऽपि चतुर्लेश्यावन्तः स्युः । को भावः ? चतुर्दशदण्डकेषु चतस्रो लेश्याः भवन्ति । तद् विस्तरेणाह-भवनपतीनां व्यन्तराणां च कृष्णा नीला कापोता तैजसी चेति चतस्रो लेश्याः स्युः । च पुनः पृथिव्यब्वनस्पतीनां कृष्णाद्याश्च-तस्रो लेश्याः स्युः, अत्रापि विशेषमाह-परमाधार्मिकाणां कृष्णैव ज्योतिष्केषु आद्यकल्पद्विके च तेजोलेश्या । कल्पत्रिके सनत्कुमारादिके पद्मलेश्या लान्तकादिषु चानुत्तरान्तेषु शुक्ललेश्या भवति भवति इत्यध्याहारः । सप्तमं लेश्याद्वारं निरूपितं । अथ अष्टम इन्द्रियद्वारं व्याख्यानयति-इंदियेति० इन्द्रियद्वारं सुगममपि वहितः किमपि विशेषमाह-तत्र इन्द्रियाणि पञ्च श्रोत्रादीनि प्रसिद्धान्येव सामान्यतः, विशेषतः पुनस्तानि द्विधा द्रव्येन्द्रियाणि भावेन्द्रियाणि ( च ) । तत्र द्रव्येन्द्रियाणि पुद्गलद्रव्यरूपाणि भावेन्द्रियाणि लब्ध्युपयोगलक्षणानि, तत्र पुनर्द्रव्येन्द्रियाणि निर्वृत्त्युपकरणभेदात् द्विधा । निर्वृत्तिरपि द्विधा अन्तर्बहिश्च । तत्र श्रोत्रेन्द्रियस्यान्तर्मध्ये कदम्बपुष्पाकारदेहावयवरूपा चक्षुषोर्मसूराकारा घ्राणयोर्गतिमुक्तपुष्पाकारा रसनायाः क्षुरप्राकारा स्पर्शेन्द्रियस्य च नानाकारा विचित्रसंस्थाना निर्वृत्तिरस्ति इत्यर्थः । द्रव्येन्द्रियस्वरूपं प्रोक्तं, अथ भावेन्द्रियाणि लब्ध्युपयोगरूपाणि जीवस्य ज्ञानावरणादिकर्मक्षयोपशमभावात् या शब्दग्रहणशक्तिः सा लब्धिः, येन पुनः शब्दादीनां ग्रहणपरिणामः स उपयोगः, एतद्द्वयरूपाणि भावेन्द्रियाणि । द्रव्येन्द्रियभावेन्द्रिययोः संस्थानं स्वरूपं च व्याख्यातं । अथ एषां पञ्चेन्द्रियाणां विषयमाह- श्रवणयोर्द्वादशयोजनविषयः स्यात्, द्वादशयोजनात मेघादीनां शब्दग्रहणशक्तिरस्ति इत्यर्थः। च पुनः चक्षुषोः किञ्चिदधिकं एकं लक्षं विषयः स्यात्, उत्कृष्टतः किञ्चिदधिकमेकं लक्षं दृष्टिप्रमाणं भवति इत्यर्थः, अत्र ज्ञातं विष्णुकुमारदृष्टान्तेन । च पुनः घ्राणेन्द्रियस्य नव योजनानि यावत् विषयः स्यात्, नवयोजनात् विषयं गृह्णाति इत्यर्थः । पुन उत्कृष्टतो रसनायाः नव योजनानि यावद्विषयः

स्यात्, नवयोजनात्पुद्गलरसमास्वादयतीत्यर्थः । यथा दूरतस्तितिडीरसालक्षारादीन् दृष्ट्वा मुखे जलं समेति इति दृष्टान्तो ज्ञेयः । तथा स्पर्शेन्द्रियस्य नवयोजनानि यावत् विषयो भवति, स्वशरीरं प्रारभ्य नवयोजनप्रान्तं यावत् पुद्गलद्रव्यं स्पर्शेन्द्रियो गृह्णाति इत्यर्थः । च पुनरेषां पञ्चानां विषयभेदं विवृणोति– श्रोत्रयोराकर्णन–श्रवणं त्रिधा भवति, यथा– शुभः अशुभः मिश्रश्च । अथवा जीवेभ्यो द्वीन्द्रियादिभ्यः,अजीवेभ्यः पटहादिभ्यो मिश्रेभ्यो भेर्यादिभ्यः,( शब्दानामुत्पन्नानां ) कर्णयोराकर्णनं त्रिविधं स्यात् । च पुनः चक्षुषोर्विलोकनभेदाः पञ्चधा भवन्ति,यथा–चक्षुषा पञ्च शुक्लपीतरक्तनीलकृष्णा वर्णा गृह्यन्ते, पञ्चवर्णा दृष्टिगोचरा भवन्ति इत्यर्थ । तथा घ्राणेन्द्रियस्य द्वौ सुगन्धदुर्गन्धविषयभेदौ भवतः, घ्राणेन्द्रियं सुगन्धदुर्गन्धे गृह्णाति इत्यर्थः, घ्राणविषये समभ्येत इत्यर्थः । रसनायाः पञ्च कटुकादिविषयभेदा भवन्ति । केऽपि षडप्याहुः, यथा कटुकतिक्तकषायाम्लमधुरक्षारभेदात् । षण्णामपि रसानां स्वादं जिह्वा जानाति इत्यर्थः । तथा स्पर्शेन्द्रियस्याष्टौ सुकुमालादिविषयभेदा भवन्ति, यथा– सुकुमालकर्कशगुरुलघुशीतोष्णस्निग्धरूक्षभेदात्. स्पर्शेन्द्रियः स्पर्शेन स्पर्शं जानाति इत्यर्थः । पञ्चेन्द्रियाणां सर्व्वेऽपि त्रयोविंशतिर्विषयभेदा जाता इत्यर्थः । अथ श्रवणादीनामवगाहनामाह–चतुर्णां कर्णचक्षुर्घ्राणरसनानामङ्गुलासंख्येयभागावगाहना भवति । च पुनः स्पर्शेन्द्रियस्य स्वदेहप्रमाणावगाहना ज्ञातव्या । अथ केषामिन्द्रियाणां कामभोगेच्छा भवति तल्लक्षणमाह–श्रवणचक्षुषोः कामेच्छा भवति, च पुन घ्राणरसनास्पर्शेन्द्रियाणा भोगेच्छा भवति, आद्यौ द्वौ कामिनौ ज्ञेयौ त्रयः प्रान्ताः भोगिनो ज्ञेया इत्यर्थः । अथ एषां पञ्चेन्द्रियाणां पुनरुपकरण किं स्यात्तदाह–कर्णेन्द्रियादीनां निजनिजविषयग्रहणशक्तिर्यथा चन्द्रहासस्य छेदनशक्तिरिव । इन्द्रियाणां सदृष्टान्तो विचारः प्रवचनसारोद्धारवृत्तितो भावनीयः । अष्टममिन्द्रियद्वारं व्याख्यातं । अथ नवमं समुद्घातद्वारं प्ररूपयति–मणुएसु इति० मनुष्ये सप्त समुद्घाता भवन्ति ॥ १९ ॥

**वेयणकसायमरणे, वेउव्विय तेअए अ आहारे।**
**केवलिय समुग्घाया, सत्त इमे हुंति सन्नीणं ॥१६॥**

टीका—वेयणकसायेति० संज्ञिमनुष्याणाममी सप्त वेदनाकपायमरणादि(घाः)समुद्घाता भवन्ति, भवन्तीत्यध्याहारः ॥१६॥

**एगिंदियाण केवल--तेउआहारग विणा उ चत्तारि।**
**ते विउव्वियवज्जा, विगला सन्नीण ते चेव ॥१७॥**

टीका—एगिन्दियाणेति० एकेन्द्रियाणां केवलतैजसआहारकान् विना- वर्जयित्वा चत्वारो वेदनाकषायमरणवैक्रियलक्षणाः समुद्घाता भवन्ति। तु पुनः वैक्रियवर्ज्जास्ते पूर्वज्ञाः ( काः )। के ते ? केवलतैजसआहारकवैक्रियसमुद्घातवर्ज्जा विकला भवन्ति, विकलानां त्रयो वेदनाकषायमरणरूपाः समुद्घाता भवन्तीत्यर्थः। संज्ञिनां ते सप्त समुद्घाता भवन्ति। तुः पुनरर्थे। एव निश्चयार्थे। चः समुच्चयार्थे ॥ १७ ॥

**पण गब्भतिरिसुरेसु, नारयवाउसु चउर तिय सेसे।**
**विगल दुदिट्ठी थावर, मिच्छत्ति सेस तिय दिट्ठी।१८।**

(अव०) गर्भजतिर्यक्सुरयोः पञ्च, नारकवाय्वोश्चत्वारः। शेषे स्थावरे विकले च त्रयः समुद्घाताः सर्वत्रानुक्रमेण ।९। दशमं दृष्टि द्वारमाह- विकलेषु दृष्टिद्विकं सम्यक्त्वमिथ्यात्वरूपं,स्थावरा मिथ्यात्विनः। शेषास्तिर्यक्सुरनारकनरास्त्रिदृष्टयः सम्यक्मिथ्यात्वमिश्र सहिता भवन्ति १० ॥ १८ ॥ अथैकादशदर्शनद्वारमाह—

टीका—पणगब्भेति, गर्भजतिर्यक्षु भवनपत्यादिवैमानिकान्तेषु देवेषु पञ्च समुद्घाता भवन्ति। तथाहारककेवलिसमुद्घाताभावात्। नारयेति० नैरयिकवाय्वोराद्याश्चत्वारः समुद्घा-

ता भवन्ति । तियसेसे इति०, शेषेषु त्रयः समुद्घाता भवन्ति । चकारात् चतुर्षु पृथिव्यप्तेजोवनस्पतिषु विकलेन्द्रियेषु चा-धात्रयः समुद्घाता भवन्ति । अर्थात् सप्तदण्डकेषु त्रयः समुद-घाता भवन्तीत्यर्थः । नवमं समुद्घातद्वारं व्याख्यातं । अथ द-शमं दृष्टिद्वारं कथ्यते । विगलेति० विकलेषु द्वित्रिचतुरिन्द्रि-येषु द्वे दृष्टी भवतः, सम्यग्दृष्टिर्मिथ्यादृष्टिश्चेत्यर्थः । स्थावरा-णामेका मिथ्यादृष्टिः स्यात् । सेसति० शेषेषु दण्डकेषु तिस्रो दृष्टयो भवन्ति । सविस्तरेणाह–नैरयिकाणां भवनपत्यादिवै-मानिकान्तानां देवानां मनुष्याणां गर्भजतिरश्चां च तिस्रो दृष्ट-यः प्राप्यन्ते । कोऽर्थः ? षोडशदण्डकेषु तिस्रो दृष्टयो भवन्ती-त्यर्थः । दशमं दृष्टिद्वारं व्याख्यातं । चः समुच्चयार्थः ॥ १८ ॥

अथ एकादशं दर्शनद्वारमाह—

**थावरबितिसु अचक्खू, चउरिंदिसु तदुगं सुए भणियं**
**मणुआ चउदंसणिणो, सेसेसु तिगं तिगं भणिअं ॥१९॥**

(अव०) स्थावरद्वीन्द्रियत्रीन्द्रियेषु केवलमचक्षुर्दर्शनं, चतुरि-न्द्रियेषु तद् द्विकं चक्षुरचक्षूरूपं श्रुते कर्मग्रन्थादौ भणितं,मनुष्याश्च-तुर्दर्शनिनः। शेषेषु सुरनारकतिर्यक्षु त्रिकं त्रिकं दर्शनस्य चक्षुरचक्षुरव-धिरूपं ।११। ॥१९॥ द्वारद्वयं समकमाह—

टीका—थावरबितिसुत्ति० पञ्चसु स्थावरेषु द्वीन्द्रियेषु त्रीन्द्रि-येषु च अचक्षुर्दर्शनमेकं भणितं प्रोक्तं श्रुते । चतुरिन्द्रियेषु तद्-द्विकं भणितं तयोश्च चक्षुरचक्षुर्दर्शनयोर्द्विकं तद्द्विकं । च पुनः मनुष्याः चतुर्दर्शनिनो भवन्ति, मनुष्येषु चत्वारि चक्षुरचक्षुरव-धिकेवलरूपाणि दर्शनानि भणितानीत्यर्थः । सेसेसु तिगं तिगं-ति० शेषेषु दण्डकेषु त्रिकं त्रिकं भणितम् । नैरयिकेषु भवनप-त्यादिवैमानिकावसानेषु तिर्यक्षु चाद्यानि त्रीणि दर्शनानि भव-न्ति, एतावता पञ्चदशदण्डकेषु त्रीणि आद्यानि दर्शनानि भव-न्तीत्यर्थः । दर्शनद्वारं समुदीरितम् ॥ १९ ॥

अथ द्वादशं ज्ञानद्वारं व्याख्यानयति—

**अन्नाण नाण तिय तिय, सुरतिरिनिरए थिरे अनाणदुगं**
**नाणन्नाणदु विगले, मणुए पण नाण ति अनाणा २०।**

(अव०) द्वन्द्वैकवद्भावात् सुरतिर्यग्निरयेऽज्ञानत्रिकं ज्ञानत्रिकं च भवति सम्यक्त्वप्राप्तौ स्थिरे ज्ञानद्विकं, यद्यपि भूदकवनेषु सैद्धान्तिकमतेन सम्यक्त्वं वमतां देवानां तेषूत्पादे सास्वादनसद्भावाच्च श्रुतमती भवतः, परं नेहाधिकृते विकले ज्ञानाज्ञानयोर्द्विकं, मनुष्येषु पञ्च ज्ञानानि त्रीण्यज्ञानानि भवन्ति ॥ २० ॥ चतुर्दशं योगद्वारमाह—

टीका—अन्नाणनाणेति० सर्वेषु देवेषु तिर्यक्षु नैरयिकेषु च ज्ञानत्रिकं भवति, त्रीणि मतिज्ञानश्रुतज्ञानावधिज्ञानरूपाणि भवन्तीत्यर्थः । च पुनः विकलेषु द्वित्रिचतुरिन्द्रियेषु ज्ञानद्विकं भवति, मतिज्ञानश्रुतज्ञाने स्यातामित्यर्थः । च पुनः मनुष्येषु पञ्चज्ञानानि भवन्ति, मतिज्ञानश्रुतज्ञानावधिज्ञानमनःपर्यायज्ञानकेवलज्ञानरूपाणि भवन्तीत्यर्थः । द्वादशं ज्ञानद्वारं प्ररूपितम् । अथ गाथान्तर्भूतं त्रयोदशमज्ञानद्वारं निरूप्यते-सर्वेषु देवेषु तिर्यक्षु नैरयिकेषु त्रीणि मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूपाणि अज्ञानानि भवन्ति । च पुनः स्थावरेषु अज्ञानद्विकं भवति, मत्यज्ञानं श्रुताज्ञानं च स्यादित्यर्थः । पुनः द्विकलेषु अज्ञानद्विकं भवति, मत्यज्ञानं श्रुताज्ञानं च स्यादित्यर्थः । मनुष्येषु मत्यज्ञानश्रुताज्ञानविभङ्गज्ञानरूपाणि त्रीण्यज्ञानानि भवन्ति । ज्ञानद्वारान्तरज्ञानद्वारमन्तर्भूतं नत्र प्रादुष्कृतं । अत्र चकारः समुच्चयार्थः ॥२०॥

अज्ञानद्वारं संहृत्याथ चतुर्दशं योगद्वारमाह—

**सच्चेअरमीसअसच्च-मोस मणवय विउव्विआहारे ।**
**उरलं मीसा कम्मण, इय जोगा देसिया समए ॥ २१ ॥**

टीका—सच्चेअरेति० प्रथमः सत्यमनोयोगः १ । इतरो द्वितीयोऽसत्यमनोयोगः २ । तृतीयो मिश्रमनोयोगः ३ । चतुर्थोऽसत्यामृषामनोयोगः ४ । तथैव वचनस्यापि चत्वारो योगा ज्ञेयाः । नवम औदारिकयोगः ९ । दशम औदारिकमिश्रयोगः १० । एकादशो वैक्रिययोगः ११ । द्वादशो वैक्रियमिश्रयोगः १२ । त्रयोदश आहारकयोगः १३ । चतुर्दश आहारकमिश्रयोगः १४ । त्रयाणामौदारिकादीनां प्रत्येकं मिश्रशब्दः प्रयोज्यः । पञ्चदशस्तु तैजसकार्मणयोगः १५ । को भावः ? मनोवचनयोरष्टौ योगाः कायस्य सप्त योगाश्च स्युः, सर्वे पञ्चदश योगा ज्ञेया इत्यर्थः । समये सिद्धान्ते भगवता इति योगा दर्शिताः, आगमे योगाः कथिता इत्यर्थः । कथमितीति किं ते पूर्वोक्ता एवेत्यर्थः ॥२१॥

केषां कियन्तो योगा भवन्ति तदाह—

**इक्कारस सुरनिरए, तिरिएसुं तेर पनर मणुएसुं ।**
**विगले चउ पण वाए, जोगतियं थावरे होइ ॥२२॥**

( अव० ) औदारिकद्विकाहारकद्विकाभावात्सुरनिरययोर्विषये एकादश योगाः । तिर्यक्षु त्रयोदश केषांचिद्वैक्रियलब्धिसम्भवेन तद्द्विकसम्भवात् । पञ्चदश मनुष्येषु, विकले औदारिकद्विककार्मणान्तिमभाषारूपं योगचतुष्कं, पञ्च वाते औदारिकद्विकवैक्रियद्विककार्मणरूपं योगत्रिकं स्थावरचतुष्के भवति ॥ २२ ॥ पञ्चदशमुपयोगद्वारमाह—

टीका—इक्कारेति० भवनपत्यादिवैमानिकान्तेषु नैरयिकेषु चौदारिकौदारिकमिश्राहारकाहारकमिश्रवर्ज्जा एकादश योगा भवन्ति । ते के ? मनोवचनयोरष्टौ कायस्य त्रयो वैक्रियवैक्रियमिश्रतैजसकार्मणरूपाः योगाः स्युः । तथा तिर्यक्षु आहारकाहारकमिश्रौ विहाय अन्ये त्रयोदश योगा भवन्ति । च पुनः मनुष्येषु पञ्चदश पूर्वोक्ता योगा भवन्ति । च पुनः विकलेषु द्वित्रि-

चतुरिन्द्रियेषु असत्यवचनौदारिकौदारिकमिश्रतैजसकार्म्मणभेदा-श्चत्वारो योगाः स्युः । च पुनः वायौ औदारिकौदारिकमिश्र-वैक्रियवैक्रियमिश्रतैजसकार्मणलक्षणभेदात् पञ्च योगा भवन्ति । वायून् वर्जयित्वा चतुर्षु स्थावरेषु औदारिकौदारिकमिश्रतैजस-कार्मणलक्षणाः त्रयो योगाः स्युः । योगद्वारं व्याख्यातम् । अत्र चकारोऽध्याहारः ॥ २२ ॥

अथ पञ्चदशमुपयोगद्वारं व्याख्यानयति—

**ति अनाण नाण पण चउ, दंसण बार जिअलक्ख-णुवओगा।**
**इय बारस उवओगा, भणिया तेलुक्कदंसीहिं ॥२३॥**

टीका—तिअनाणनाणेति०, त्रिलोकदर्शिभिर्द्वादश उपयोगाइति भणिताः । त्रयाणां लोकानां समाहारस्तत्त्रिलोकं, त्रिलोकं पश्य-न्ति ते त्रिलोकदर्शिनस्तैः कथमितीति किं ते ? तानाह—मत्य-ज्ञान-श्रुताज्ञान-विभङ्गज्ञानरूपाणि त्रीण्यज्ञानानि तथा पञ्चज्ञाना-नि च प्रसिद्धानि, च पुनः चत्वारि चक्षुरचक्षुरवधिकेवलदर्श-नलक्षणानि दर्शनानि, सर्वेऽपि मिलिता द्वादश उपयोगा जाता भवन्ति, भवन्तीत्यध्याहारः तत्र ज्ञानानि विशेषार्थावगाहीनि । दर्शनानि तु सामान्यार्थावगाहीनि । एतेषां ( एते ) द्वादश जीवलक्षणानि, इति स्वरूपकथनम् । उपयोगा नाम्नेति ज्ञात-व्याः ॥ २३ ॥

केषु केषु कति कति उपयोगा भवन्ति ? तानाह—

**उवओगा मणुएसु, बारस नव निरयतिरियदेवेसु ।**
**विगलदुगे पण छक्कं, चउरिंदिसु थावरे तिअगं ॥२४॥**

( अव० ) मनुष्येषु द्वादशोपयोगाः । अष्टौ साकाराश्चत्वारो निराकाराः,एत एव मनःपर्यायकेवलज्ञानकेवलदर्शनरहिता नव नि-

रयतिर्यग्देवेषु, विकलद्विके मति १ श्रुत २ मत्यज्ञान ३ श्रुताज्ञान ४ अचक्षुदर्शनरूपाः पञ्चोपयोगाः । चतुरिन्द्रियेषु पञ्च पूर्वोक्ताः चक्षुर्दर्शनसहिताः षट् उपयोगाः । स्थावरे त्रिकं मत्यज्ञानश्रुताज्ञाना चक्षुर्दर्शनरूपम् ॥ २४ ॥ षोडशं सप्तदशं च संख्याद्वारमाह—

टीका—उवओगा मेति० मनुष्येषु द्वादश उपयोगा भवन्ति । च पुनः नैरयिकेषु तिर्यक्षु च भवनपत्यादिवैमानिकान्तेषु नव उपयोगा भवन्ति, त्रीण्यज्ञानानि आद्यानि त्रीणि ज्ञानानि केवलदर्शनरहितानि त्रीणि दर्शनानि ज्ञेयानि, सर्वेऽपि मिलिता नव उपयोगा जाता इत्यर्थः । च पुनर्विकलद्विके द्वीन्द्रिये त्रीन्द्रिये च मतिज्ञान–श्रुतज्ञान–मत्यज्ञान–श्रुताज्ञान–अचक्षुदर्शनभेदात् पञ्च उपयोगा भवन्ति । तथा चतुरिन्द्रियेषु मतिज्ञानश्रुतज्ञानमत्यज्ञानश्रुताज्ञानचक्षुर्दर्शनाचक्षुर्दर्शनभेदात् षट् उपयोगा भवन्ति । पञ्चसु स्थावरेषु मत्यज्ञानश्रुताज्ञानअचक्षुर्दर्शनभेदास्त्रय उपयोगा भवन्ति । उपयोगद्वारं व्याख्यातम् ॥ २४ ॥

अथ षोडशमुपपाताख्यं सप्तदशं च्यवनाख्यं चेति द्वारद्वयं गाथयाऽऽह ( एकयैवाह )—

**संखमसंखा समए, गब्भयतिरिविगलनारयसुरा य।**
**मणुआ नियमा संखा, वणणंता थावर असंखा ।२५।**

(अव०) चतुर्दशरज्ज्वात्मकेऽपि लोके एकस्मिन् समये उत्पद्यमाना नियमेति पदं सर्वत्र ग्राह्यं, तेन नियमान्निश्चयेन गर्भजतिर्यग्विकलनारकसुराश्च एको द्वौ त्रयो दश विंशतिर्यावत्सङ्ख्याता-असङ्ख्याता वा प्राप्यन्ते नत्वनन्ताः । मनुष्यास्तु नियमात्सङ्ख्याता एव । वनस्पतयोऽनन्ताः “ निच्चमसंखो भागो अणंतजीवो चयइ एइ ” इतिवचनात् शेषाश्चत्वारः स्थावरा असङ्ख्याता एव न सङ्ख्याता न चानन्ताः ॥ २५ ॥ प्रस्तावादाह—

टीका—गर्भजतिर्यञ्चो विकला द्वित्रिचतुरिन्द्रिया नैरयिका भवनपत्यादिवैमानिकान्ताश्चैकस्मिन् समये जघन्यत एको द्वौ त्रयो वा उत्कृष्टतः संख्याता असंख्याता वोपपाते तथैव च्यवने च भवन्ति । को भावः ? एकस्मिन् समये उत्कृष्टतः संख्याता असंख्याताश्च गर्भजतिर्यगादयः उत्पद्यन्ते च्यवन्ते चेत्यर्थः । विशेषमाह—केवलं सहस्रारादूर्ध्वं सर्वत्र देवाः संख्याता उत्पद्यन्ते च्यवन्ते च, यतस्तत्र मनुष्या एव यान्ति, आनतादिच्युता देवाश्च नरेष्वागच्छन्ति अयं विशेषः । तथा एकस्मिन् समये एकादिसंख्यानां चोपपाते तथैव च्यवने ज्ञेया, अथवा नियमेति पदं सर्वत्र योज्यम् । सम्मूर्च्छिममनुष्या असंख्येया उत्पद्यन्ते च्यवन्ते च । च पुनः वनस्पतिकायिका जीवाः स्वस्थानतः प्रतिसमयमनन्ता एवोत्पद्यन्ते । तथैव च्यवन्ते, यद्यस्मात् कारणात् एकैकस्मादपि निगोदात् तदसंख्येयभागोऽनन्तजीवात्मको नित्यं च्यवते उद्वर्तते एति चोत्पद्यते । यदा तु परस्थानत उत्पद्यमानाश्चिन्त्यन्ते तदा संख्याता असंख्याता एवेत्यर्थः । अथ स्थावराः पृथिव्याद्याः एकेन्द्रियाः स्वस्थानतः परस्थानतो वेत्यनपेक्ष्य सामान्यतः उत्पत्तौ चिन्त्यमानाः प्रत्येकमनुसमयमसंख्याता भवन्त्युत्पद्यन्ते तथैव असंख्याता एव च्यवन्ते, न पुनः समयानन्तरेण नाप्येकाद्याः संख्याताः॥ २५ ॥

**असंन्निनर असंखा, जह उववाए तहेव चवणे वि**
**बावीससगतिदसवास-सहस्स उक्किट्ठ पुढवाई ॥२६॥**

(अव०) असंज्ञिनो नरा उत्पद्यमाना असङ्ख्याता लभ्यन्ते । अत्रवातिदेशमाह— यथोपपातद्वारं सङ्ख्यामाश्रित्य व्याख्यातमेवं च्यवनद्वारमप्यवसातव्यम्, समानत्वादुपपातच्यवनयोः । अष्टादशं आयुर्द्वारमाह— अग्रेऽपि नरप्यायुरिति पदं सर्वत्रानुवर्त्तनीयम्, तेन पृथिव्याः द्वाविंशतिवर्षसहस्राण्युत्कृष्टमायुरिति सर्वत्र योज्यम् । एवं उदकस्य सप्त वायोस्त्रीणि, वनस्पतेर्दशवर्षसहस्राणि ॥ २६ ॥

टीका-असन्निति० असंज्ञिनो मिथ्यादृष्टयः सर्वपर्याप्तिभिरपर्याप्ताश्च एवंविधा नरा असंख्याताः प्रादुर्भवन्ति तथैवासंख्याता एव च्यवन्ते-म्रियन्ते च । यथा उपपातो भवति तथैव च्यवनमपि ज्ञेयमित्यर्थः । अपिशब्दः समुच्चयार्थः । उपपातच्यवनद्वारमभिधाय अथाष्टादशं स्थितिद्वारमाह- बावीससेति० पृथिवीकायजीवानां द्वाविंशतिवर्षसहस्रा उत्कृष्टा स्थितिः स्यात् । अथाप्कायस्थितिमाह- अप्कायस्य सप्तवर्षसहस्रा उत्कृष्टा आयुःस्थितिर्भवति । अथ वायुकायस्य स्थितिमाह- वायुकायस्य त्रयो वर्षसहस्रा उत्कृष्टा स्थितिः स्यात् । अथ वनस्पतिकायस्योत्कृष्टां स्थितिमाह- वनस्पतीनां तरुगणानां उत्कृष्टा दशवर्षसहस्रा स्थितिर्भवति ॥ २६ ॥

**तिदिणग्गि तिपल्लाऊ, नरतिरिसुरनिरयसागरातत्तीसा**

**वंतरपल्लं जोइस, वरसलक्खाहियं पलियं ॥ २७ ॥**

( अव० ) अग्नेः त्रीणि दिनान्यायुः । गर्भजतिर्यग्नरा त्रिपल्यायुषो देवकुर्वादिषु सुरनारकाणां त्रयस्त्रिंशत्सागरोपमाणि व्यन्तराणां पल्योपमम्, ज्योतिषां वर्षलक्षाधिकं पल्योपमम् ॥ २७ ॥ असुराणामायुःस्थितिमाह—

टीका—तिदिणग्गीति० तेजस्कायस्य उत्कृष्टा स्थितिः त्रीणि दिनानि भवन्ति । स्थावराणां स्थितिं प्ररूप्याथ नरतिरश्चाः स्थितिमाह-तिपल्लेति० नरतिरश्चोस्त्रीणि पल्योपमानि स्थितिर्भवति । अथ सुरनैरयिकानां स्थितिमाह-सुरनैरयिकयोस्त्रयस्त्रिंशत्सागराणि उत्कृष्टा स्थितिर्भवति । अथ व्यन्तराणां स्थितिमाह-वन्तरेति० व्यन्तरदेवदेवीनां दशवर्षसहस्राणि जघन्या स्थितिः स्यात् । अथ उत्कृष्टां स्थितिमाह- व्यन्तरदेवानां पल्योपमं व्यन्तरदेवीनां तु पल्यार्द्धं ज्योतिष्काणां चन्द्ररविग्रहनक्षत्राणां च वर्षाणां लक्षेणाधिकं पल्योपममुत्कृष्टमायुरवगन्तव्यम्। एषां किञ्चिद्विवरणमाह-चन्द्राणां लक्षेणाधिकं पल्योपममायुस्ततो रवीणां वर्षाणां सहस्राधिकं पल्योपमं ततो ग्रहाणां पल्योपमं

ततो नक्षत्राणां पल्योपमार्द्धं ततस्तारकाणां पल्यस्य चतुर्थो भागः। एषां देवीनां स्थितिमाह—चन्द्रविमानवासिदेवीनां पञ्चाशद्वर्षसहस्राधिकं पल्यार्द्धं ततः सूर्यदेवीनां पञ्चशतवर्षाधिकं पल्यार्द्धं ततो ग्रहदेवीना पल्यार्द्धमेव नक्षत्रदेवीनां विशेषाधिकः पल्यस्य चतुर्थो भागः ततस्तारकदेवीनां किञ्चिदधिकः पल्यस्याष्टमो भागः । अथ ज्योतिष्काणां जघन्यां स्थितिमाह—चन्द्रादिदेवदेवीरूपाणां चतुर्णां युगलानां पल्यस्य चतुर्थो भागः पञ्चमके युगले तारकदेवदेवीरूपे पल्याष्टमो भागः ॥२७॥

असुराणां स्थितिमाह—

**असुराण अहियअयरं, देसूणदुपल्लयं नवनिकाए ।**
**बारस वासुणपणदिण, छम्मासुक्किट्ठ विगलाऊ ॥२८॥**

(अव०) असुराणां चमरादीनां कियताप्यधिकमतरं सागरोपमशेषे निकायनवके देशोनपल्योपमद्विकं दक्षिणदिशमाश्रित्य द्व्यर्धपल्योपमं उत्तरस्यां तु द्वे देशोनपल्योपमे । द्वीन्द्रियाणां द्वादशवर्षाणि । त्रीन्द्रियाणामेकोनपञ्चाशद्दिनानि । चतुरिन्द्रियाणां षण्मासा उत्कृष्टमायुः । २८ । उक्तोत्कृष्टा स्थितिः । अथ जघन्यान्तामेवाह—

टीका—असुराण अहियेति० असुराणां किञ्चिदधिकमेकमतरमेकं सागरोपममित्यर्थः । तत्र दाक्षिणात्यानामसुराणामेकमतरमौत्तराणां साधिकमतरमित्यर्थः । दाक्षिणात्यानां धरणेन्द्रादीनां नवनिकायानां द्वितीयमर्द्धं यस्य ( द्वितीयस्यार्धं यत्र ) तद् द्व्यर्द्धं सार्द्धपल्योपमा स्थितिर्भवति इत्यर्थः । तथा उत्तरदिग्वर्तिनां नवनिकायानां देशोने किञ्चिदूने द्वे पल्योपमे भवतः। तरीतुमशक्यं प्रभूतकालतरणीयत्वादतरं सागरोपमं । असुराणां स्थितिं प्ररूप्य अथ विकलानां स्थितिं प्ररूपयति । बारसेति० विकलानां—द्वीन्द्रियाणां त्रीन्द्रियाणां चतुरिन्द्रियाणां च द्वादश वर्षाणि एकोनपञ्चाशद्दिनानि षण्मासाश्च क्रमेणोत्कृष्टा स्थितिर्ज्ञेया ज्ञातव्या इत्यर्थः ॥ २८ ॥

पृथिव्यादिदशपदानां जघन्यां स्थितिमाह—

**पुढवाइदसपयाणं, अंतमुहुत्तं जहन्नआउठिई ।**
**दससहस्सवरिसठिइआ, भवणाहिवनिरयवंतरिया ॥ २९ ॥**

(अव०) स्थावरपंचकविकलत्रिकतिर्यक्नराणामंतर्मुहूर्त्तं जघन्यायुः स्थितिः । भवनाधिपनरकव्यंतरा जघन्यतो दशसहस्रस्थितिका भवंति २९ ॥ अथ वैमानिकानामायुःस्थितिमाह ।

टीका—पुढवाइदसेति० पञ्च स्थावरास्त्रयो विकलेन्द्रिया द्वौ मनुष्यतिर्यञ्चौ सर्वाणि मीलितानि पृथिव्यादीनि दश पदानि जातानि । एतेषां पृथिव्यादिदशपदानामन्तर्मुहूर्त्तं जघन्यमायुर्भवति । अथ भवनाधिपानां जघन्यस्थितिमाह- दससहसेति० भवनाधिपानां नैरयिकाणां व्यन्तराणां च दशवर्षसहस्राणि जघन्या स्थितिर्ज्ञेया ॥ २९ ॥

अथ वैमानिकानां स्थितिमाह—

**वेमाणिअजोइसिया, पल्लतयठंसआउआ हुंति ।**
**सुरनरतिरिनिरएसुं, छ पज्जत्ती थावरे चउगं ॥ ३० ॥**

( अव० ) वैमानिका ज्योतिषिकाश्च जघन्यतः क्रमेण एकपल्योपमाष्टभागायुषो भवन्ति । अथैकोनविंशतितमं पर्याप्तिद्वारमाह । सुरनरतिर्यक्निरयेषु पर्याप्तेषु षट्पर्याप्तयो भवन्ति । स्थावरे आहारशरीरइंद्रियश्वासोच्छ्वासरूपं पर्याप्तिचतुष्कं, अपर्याप्ता अपि जीवा पर्याप्तित्रयं समाप्यैव म्रियंते नार्वाक् ॥ ३० ॥

टीका—वेमाणीति० वैमानिकानां जघन्यं पल्योपममायुर्भवति । ज्योतिष्काणां च तदष्टांश आयुर्भवति । तस्य पल्यस्य अष्टांशः पल्यस्याष्टांशोऽ( पल्याष्टांशोऽ ) ष्टमो भागो भवती-

त्यर्थः । उत्कृष्टजघन्ययोः स्थितिमभिधाय अथैकोनविंशतितमं पर्याप्तिद्वारमाह–सुरनरेति० भवनपत्यादिवैमानिकान्तेषु सुरेषु नरेषु नैरयिकेषु तिर्यक्षु च षडपि पर्याप्तयो भवन्ति । पञ्चसु स्थावरेषु आहारशरीरेन्द्रियश्वासोच्छ्वासभेदात् चतस्रः पर्याप्तयो भवन्ति ॥ ३० ॥

अथ विकलानां पर्याप्तिमाह—

**विगले पंच पजत्ती, छद्दिसि आहार होइ सव्वेसिं ।**

**पणगाइपए भयणा, अह सन्नतियं भणिस्सामि ॥३१॥**

( अव० ) पूर्वोक्तं पर्याप्तिचतुष्कं भाषापर्याप्त्यधिकं विकले पर्याप्तिपञ्चकम् । अथ विंशतितममाहारद्वारमाह । सर्वेषां जीवानां षड्दिक आहारो भवति । सर्वे जीवा दिक्षट्कस्थानाहारपुद्गलान् गृह्णन्तीतिभावः । पञ्चादिकादिके आहारे भजना । यथा लोकान्तर्वर्त्तिजीवानां पञ्चदिक्कः । लोकनिष्कूटस्थानां त्रिचतुर्दिक्कः । एकविंशं संज्ञाद्वारमाह । अथ संज्ञात्रिकं भणिष्यामि ॥ ३१ ॥

टीका– विगले पञ्चेति विकलानां द्वित्रिचतुरिन्द्रियाणामाहारशरीरेन्द्रियश्वासोच्छ्वासभाषाभेदात् पञ्च पर्याप्तयो भवन्ति । पर्याप्तिद्वारं व्याख्यातं । अथ विंशतितममाहारद्वारं विवृणोति । छद्दिसित्ति० षट्सु दिक्षु सर्वेषां संसारिणां जीवानां गत आहारो भवति । षड्भ्यो दिग्भ्यो जीवा आहारं गृह्णन्ति इत्यर्थः । लोकान्ते लोकप्रान्ते च पुनः लोककोणे लोकान्ते ये जीवास्सन्ति तेषां जीवानां पञ्चसु अथवा चतसृषु तिसृषु यथा संभवमाहारो भवति, पञ्चकादिपदेषु भजना कोऽर्थः ? केचन जीवाः पञ्चसु दिक्षु गतान् पुद्गलान् केचन चतसृषु दिक्षु गतान् पुद्गलान् केचन तिसृषु दिक्षु गतान् पुद्गलान् आहारयन्ति इति भावः । इत्याहारद्वारं व्याख्यातं । अथैकविंशतितमं संज्ञाद्वारं व्याख्यास्यति । अहेति० अथ संज्ञात्रिकं भणिष्यामि भणामीत्यर्थः ॥ ३१ ॥

**चउविहसुरतिरिएसुं, निरएसु य दीहकालिगी सन्ना।**
**विगले हेउवएसा, सन्नारहिया थिरा सव्वे ॥३२॥**

( अव० ) चतुर्विधसुरतिर्यक्षु निरयेषु च दीर्घकालिकी संज्ञा। दीर्घोऽतीतानागतवर्त्तमानविषयः कालो ज्ञेयो यस्या इति व्युत्पत्तेः, विकले हेतूपदेशिकी संज्ञा। किञ्चिन्मनोज्ञानसहिता वर्त्तमानविषया संज्ञेत्यर्थः। विशिष्टैतत्संज्ञात्रयरहिताः सर्वे स्थिरा ज्ञेयाः ॥३२॥

टीका—चउविहेति० चतुर्विधसुरेषु तिर्यक्षु नैरयिकेषु च दीर्घकालिकीसंज्ञा भवति। अत्र चकारः समुच्चयार्थः, भवतीत्यध्याहारः। यः पुरुषः दीर्घमपि कालं विषयमतीतमर्थं स्मरति भविष्यच्च वस्तु चिन्तयति। कथं नु नाम मया कर्तव्यमिति स दीर्घकालिक्युपदेशेन युक्तः। विकलेषु विकलेन्द्रियेषु हेतूपदेशिकी संज्ञा स्यात्। यस्तु सचिन्त्येष्टानिष्टेषु छायातपादिवस्तुषु स्वदेहपालनहेतोः प्रवृत्तिनिवृत्ती विधत्ते स हेतूपवादोपदेशेन युक्तः। सर्वे स्थावराः संज्ञारहिता भवन्ति। स्थावरेषु संज्ञा न भवन्तीत्यर्थः ॥ ३२ ॥

केषु केषु काः संज्ञा भवन्ति? ता आह—

**मणुआण दीहकालिय, दिट्ठीवाओवइसिया केवि।**
**पण पजतिरिमणुअच्चिय, चउविहदेवेसु गच्छंति ॥३३॥**

( अव० ) मनुजानां दीर्घकालिकी संज्ञा। दृष्टिवादोपदेशिकी क्षायोपशमिकादिसम्यक्तसहिताः केऽपि। पञ्चेन्द्रियतिर्यंचोऽप्येतत्संज्ञायुक्ता भवन्ति। केचित् परमलत्वान्न विवक्षिताः, द्वाविंशं गतिद्वारं त्रयोविंशमागतिद्वारं चाह। पर्याप्ताः पञ्चेन्द्रियाश्च तिर्यंचो मनुजाश्चतुर्विधदेवेषु गच्छन्ति। न शेषजीवाः। इति देवानामागतिद्वारम् ॥ ३३ ॥ अथ देवानां गतिद्वारमाह—

टीका—मणुआणेति० मनुष्याणां सामान्यतः दीर्घकालिकीसंज्ञा
भवति, विशेषस्तु केऽपि मनुजाः दृष्टिवादोपदेशिकाः स्युः।
यस्तु सम्यग्दृष्टिर्हेतोर्यथाशक्ति रागद्वेषादिरिपून् पराभवति
जयतीत्यर्थः, स दृष्टिवादोपदेशिकया सम्यग्दृष्टिरेवेत्यर्थः। केऽ-
पि पञ्चेन्द्रियतिर्यञ्चोऽपि एतत्संज्ञायुक्ता अपि, परमल्पत्वान्न
विवक्षिताः। सुखावबोधाय स्वामितया संज्ञात्रयं योजयति,
यथा-द्वीन्द्रियादीनां अर्थात् सम्मूर्च्छिमपञ्चेन्द्रियाणां च हेतू
पदेशिकीसंज्ञा, गर्भजतिर्यग्नरसुरनारकाणां दीर्घकालिकीसंज्ञा,
छद्मस्थसम्यग्दृशां मनुष्याणां केषाञ्चित् तिरश्चां च दृष्टिवादोप-
देशिकी संज्ञा, तु पुनः मनुष्याणां दीर्घकालिकीसंज्ञा स्यात्,
अतो मनुष्येषु द्वे दृष्टी भवत इत्यर्थः। पृथिव्याद्येकेन्द्रियाणां
वल्ल्यारोहणाद्यभिप्रायरूपा ओघसंज्ञैवेत्यर्थः। संज्ञाद्वारं प्ररूपितं
। अथ द्वाविंशतितमं गतिद्वारमाह– पणपज्जेति० चतुर्विधदेवेषु
पर्याप्तिभिः पूर्णाः गर्भजपञ्चेन्द्रियतिर्यञ्चो मनुष्याश्च गच्छन्ति–
यान्तीत्यर्थः। चतुर्विधदेवेषु संख्यातायुषो मनुष्यास्तेषां गमनं
अत्र गमनं प्राप्तिः स्याद्वादो भवतीत्यवसेयम्। देवानां गति-
द्वारं समाप्तम् ॥ ३३ ॥

अथ देवानामागतिद्वारमाह—

**संखाउ पजपणिंदि, तिरियनरेसु तहेव पज्जते ।**
**भूदगपत्तेयवणे, एएसुच्चिय सुरागमणं ॥३४॥**

( अव० ) संख्यातायुःपर्याप्तपञ्चेन्द्रियतिर्यग्नरेषु। तथैव प
र्याप्ताभूदकप्रत्येकवने एतेष्वेव सुराणामागमनमुत्पादो भवति।
इति सुरगत्यागती नारकाणां गत्यागती आह ॥ ३४ ॥

टीका—संखाउ पज्जेति० संख्यातायुष्षु पर्याप्तेषु पञ्चेन्द्रिय-
तिर्यक्षु तथा मनुष्येषु च तथैव पर्याप्तयोर्भूदकयोर्भूजलयोः
प्रत्येकवनस्पतौ च एतेष्वेव पञ्चस्वेवेत्यर्थः, सुराणामागतिराग-
मनं भवति। सुराणामागतिद्वारं व्याख्यातं ॥ ३४ ॥

**पज्जत्तसंखगब्भय, तिरियनरा निरयसत्तगे जंति ।**
**निरयउवट्टा एएसु, उप्पज्जंति न सेसेसु ॥३५॥**

( अव० ) पर्याप्तसंख्यातायुषो गर्भजतिर्यग्नराः नरकसप्तके यांति 'असन्नि खलु पढम'मिति वचनात् असंज्ञिनोऽपि प्रथमां पृथिवीं यावद्यांति । परं तेषामिह नाधिकृतत्वात् । नरकादुद्वृत्ताश्च जीवा एतल्लक्षणेषु एतेष्वेव तिर्यङ्नरेषूत्पद्यंते, न शेषेषु जीवेषु । इति नारकगत्यागती ॥३६॥ अथ पृथ्व्यब्वनस्पतीनां गत्यागती आह—

टीका— पज्जत्तेति० पर्याप्ताः संख्यातायुषो गर्भजतिर्यंचः संख्यातायुषो नराश्च सप्तसु निरयेषु यान्ति-गच्छन्ति । "असन्नी खलु पढमं" इति वचनात् असंज्ञिनोऽपि प्रथमां पृथिवीं यावत् यान्ति, परं तेषा इहानधिकृतत्वात् नोक्तं । नैरयिकगतिद्वारं व्याख्यातं । अथ नैरयिकागतिद्वारं व्याख्यानयति । निरउत्ति० तथा निरयान्नरकात् उध्धृताश्च्युता जीवा एतेष्वेव संख्यातायुष्षु गर्भजतिर्यग्मनुष्येष्वप्युत्पद्यन्ते आयान्तीत्यर्थः, शेषेभ्यो द्वाविंशतिद्वारेभ्यो नैरयिका जीवा न भवन्ति, एतेषु च नोत्पद्यन्ते नायान्तीत्यर्थः । नैरयिकागतिद्वारं प्ररूपितं ॥ ३५ ॥

अथ पृथिव्यब्वनस्पतिषु जीवानां गतिद्वारमाह—

**पुढवीआउवणस्सइ, मज्झे नारयविवज्जिया जीवा ।**
**सव्वे उववज्जंति, नियनियकम्माणुमाणेणं ॥३६॥**

(अव०) पृथिव्यब्वनस्पतिकायमध्ये नारकविवर्जिताः सर्वे त्रयोविंशतिदंडकस्था जीवा उत्पद्यंते । निजनिजयथाकृतकारितानुमोदितकर्मणामनुमानेन । नजनिजेतिवदता सूत्रकृता स्वयं कृतं कर्म भुज्यते न परकृतमित्यावेदितम् । कर्मानुमानेनेति सत्कर्मणा शुभस्थाने असत्कर्मणाशुभस्थाने ॥ ३६ ॥ एतेषामेव गतिद्वारमाह ।

टीका पुढवीति० पृथिव्यब्वनस्पतीनां मध्ये नारकविवर्जिता इति, कोऽर्थः-निरयजीवान् विहाय अन्ये सर्वे त्रयोविंशतिद-ण्डकस्थजीवा निजनिजकर्मानुमानेन-निजशुभाशुभकर्मानुसारे-णोत्पद्यन्ते प्रादुर्भवन्तीत्यर्थः । गतिद्वारं विवर्णितम् ॥ ३६ ॥

अथ पृथिव्यब्वनस्पतीनां त्रयाणामागतिद्वारमाह—

**पुढवाइदसपएसुं, पुढवीआऊवणस्सई जंति ।**

**पुढवाइदसपएहि य, तेउवाउसु उववाओ ॥३७॥**

(अव०)तस्यैव दंडकत्रयस्य जीवानां गतिद्वारमाह। पृथिव्यादिदश-पदेषु अनुक्रमस्थितेषु पृथिव्यब्वनस्पतिजीवा यांति । न नारक-सुरेष्वित्यर्थः।इति पृथ्व्यब्वनस्पतीनां गत्यागती। तेजोवाय्वोरागति-द्वारमाह। तेजोवाय्वोर्विषये पृथिव्यादिदशपदेभ्य एव उत्पद्यन्ते जीवाः ॥३७॥ अथ तेजोवाय्वोर्गतिमाह—

टीका—पुढवाइत्ति० पृथिव्यादिदशपदेषु- स्थावरविकलेन्द्रिय-तिर्यग्मनुष्येषु पृथिव्यब्वनस्पतयः- पृथिव्यब्वनस्पतिसत्कजीवा यान्ति गच्छन्तीत्यर्थः । पृथिव्यादिभ्यः दशपदेभ्य जीवानां तेजोवाय्वोरुपपात उत्पत्तिर्भवति इत्यर्थः । त्रयाणां पृथिव्यब्व-नस्पतीनामागतिद्वारं व्याख्यातम् ॥ ३७ ॥

अथ तेजोवाय्वोर्गतिद्वारमाह—

**तेउवाऊगमणं, पुढवीपमुहंमि होइ पयनवगे ।**

**पुढवाइठाणदसगं, विगलाइतिअं तहिं जंती ॥३८॥**

( अव० ) तेजोवाय्वोरागमनं पृथिवीप्रमुखे पदनवके भवति इति तेजोवायुगत्यागती । विकलेन्द्रिया पृथिव्यादिदशस्थानेभ्य ए-[illegible] मृत्वा न तत्र यांति नान्यत्र । इति विकलगत्यागती ॥ ३८ ॥ अथ गर्भजतिर्यग्मनुष्याणां गत्यागती आह ।

टीका—तेउवाऊ इत्ति० तेजोवाय्वोर्गमनं पृथिव्यादिनवपदेषु स्थावरविकलेन्द्रियतिर्यक्षु तेजोवायुजीवानामुपपातः स्यात्, स्यादित्यध्याहारः।पृथिव्यादिनवपदसम्बन्धिनो(षु)जीवा(वेषु)(गच्छ) भवन्तीत्यर्थः। प्राकृतत्वात् द्विवचनं न स्यात् एकवचनं बहुवचनं च स्यात्, (तां), द्वयोस्तेजोवाय्वोर्गतिद्वारं कथितम्। अथ विकलानां गतिद्वारमाह–पुढवाइठाणेति० विकलेन्द्रियेषु पृथिव्यादिस्थानदशका जीवा यान्ति, स्थावरविकलेन्द्रियतिर्यग्मनुष्या गच्छन्ति इत्यर्थः। विकलानां गतिद्वारं व्याख्यातम्। अथ विकलानामागतिद्वारमाह–तेषु पृथिव्यादिस्थानदशकेषु विगलेति० द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियत्रिकं याति विकलेन्द्रियास्तेषु भवन्तीत्यर्थः विकलानामागतिद्वारं विवर्णितम् ॥ ३८ ॥

अथ गर्भजतिरश्चां गत्यागतिद्वारमाह—

**गमणागमणं गब्भय–तिरिआणं सयलजीवठाणेसुं।**
**सव्वत्थ जंति मणुआ, तेउवाउहिं नो जंति ॥३९॥**

( अव० ) गर्भजतिर्यंचो मृत्वा चतुर्विंशतिदंडकेषु यांति। चतुर्विंशतिदंडकेभ्यश्चोत्प ते। इति गर्भजतिर्यग्गत्यागती। मनुजा मनुष्याः सर्वत्र यांति। सर्वत्रेतिवचनबलात् चतुर्विंशतिदंडकजीवेषु कालक्षेत्रसंहननसद्भावे च सिद्धावपि यांति। आयांतश्च मनुजास्तेजोवायुवर्जितेभ्यो द्वाविंशतिदंडकेभ्यः समायांति। इति समर्थिते सविस्तर गत्यागतिद्वारे। अथ चतुर्विंशं वेदद्वारमाह।

टीका–गमणेति० सकलजीवस्थानेषु चतुर्विंशतिदण्डकेषु गर्भजतिरश्चां गमनागमने–गत्यागती भवतः। अथ मनुष्याणां गतिमाह–सर्वत्र चतुर्विंशतिदण्डकेषु मनुष्या यान्ति गच्छन्ति। अथ मनुष्याणां गतिद्वारं प्रोच्यते– द्वाविंशतिदण्डकेभ्यो उद्धृताश्च्युता जीवा मनुष्या भवन्ति, तेजोवायुभ्याम् च्युता जीवा मनुष्यत्वेन नोत्पद्यन्ते, न मनुष्या भवन्तीत्यर्थः। सूत्रपाठत्वात् अ यापि व्यस्तं प्रतिपादितं, अनुक्रमेण नोक्तमित्यर्थः। गत्यागतिद्वारे विवर्णिते ॥ ३९ ॥

अथ चतुर्विंशतितमं वेदद्वारमाह-

**वेयतिय तिरिनरेसु, इत्थी पुरिसो य चउविहसुरेसु।**
**थिरविगलनारएसुं, नपुंसवेओ हवइ एगो ॥४०॥**

(अव०) वेदत्रिकं तिर्यङ्नरेषु, स्त्रीवेदः पुरुषवेदश्च चतुर्विधसुरेषु, स्थिरविकलनारकेषु नपुंसकवेद एक एव भवति। अथ संक्षिप्तसङ्ग्रहणीगाथाद्वयानुक्तमपि, सोपयोगित्वात्किंचिज्जीवाल्पबहुत्वं दर्श्यते ॥ ४० ॥

टीका—वेअतियेति० तिर्यग्नरेषु पुरुषस्त्रीनपुंसकलक्षणा वेदा भवन्ति। तथा चतुर्विधसुरेषु स्त्रीपुरुषलक्षणौ वेदौ भवतः। च पुनः स्थावरविकलेन्द्रियनैरयिकेष्वेको नपुंसकलक्षणो वेदो भवति। अत्र चकारः समुच्चयार्थः। तत्र येन स्त्रियं प्रति अभिलाषः स्यात् स नरवेदः तृणदाहतुल्यः। येन पुरुषं प्रति अभिलाषः स्यात् स स्त्रीवेदः करीषदाहतुल्यः। येन पुंस्त्रीविषये अभिलाषः स्यात् स नपुंसकवेदः नगरदाहतुल्यः। वेदद्वारं प्ररूपितम् ॥४०॥

अथ गाथाद्वयेनाल्पबहुत्वद्वारमाह—

**पज्जमणु बायरग्गी, वेमाणिअभवणनिरयवंतरिया।**
**जोइस चउपणतिरिआ, बेइंदि तेइंदि भू आउ ॥४१॥**
**वाऊ वणस्सइच्चिय, अहिआ अहिआ कमेणिमे हुंति।**
**सव्वेवि इमे भावा, जिणा! मएऽणंतसो पत्ता ॥४२॥**

(अव०) पज्जत्तिपदं बायरत्तिपदं च वदतः सूत्रकृतोऽयमाशयः, यदहं पर्याप्तबादरजीवविषयमेवाल्पबहुत्वं वदिष्यामिनोऽपर्याप्तसूक्ष्मविषयमिति। इह संसारे स्तोकाः पर्याप्तमनुष्याः। मनुष्येभ्यो बादराग्निजीवाः असंख्यातगुणाः। एभ्यो वैमानिका अ-

संख्यातगुणाः । एभ्यो भवनपतयोऽसंख्यातगुणाः । एभ्यो नारका असंख्यातगुणाः । एभ्यो व्यंतरा असंख्यातगुणाः । एभ्यो ज्योतिष्काः संख्यातगुणाः । एभ्यश्चतुरिंद्रियाः संख्यातगुणाः । एभ्यो पंचेन्द्रियास्तिर्यंचो विशेषाधिकाः । एभ्यो द्वींद्रिया विशेषाधिकाः एभ्यस्त्रीन्द्रिया विशेषाधिकाः । एभ्यः पृथ्वीकाया विशेषाधिकाः । ततोऽप्काया विशेषाधिकाः। अप्कायिकेभ्यो वायुकायिका असंख्यातगुणाः । ततो वनस्पतयोऽनन्तगुणाः । संख्यातगुणेन असंख्यातगुणेन अनन्तगुणेन च यथासम्भवमिमे जीवाः क्रमेणाधिका भवन्ति । अथ ग्रन्थकारो जिनान् स्तौति । सर्वेऽपि च इमे पूर्वोक्ता भावाः तेषु तेषु जीवस्थानकेषु गमनागमनरूपाः हे जिनाः मया भवे भ्रमता अनन्तशः अनन्तकृत्वः प्राप्ताः यथा मया तथाऽन्यैरपि जीवैः । एतेन स्वामिनः पुरः स्वदुःखं निवेदितम् । अथ तद्विमोचनलक्षणां प्रार्थनामाह ।

टीका— पज्जमणुइति० पज्जत्ति बायरत्ति पदं वदतः सूत्रकृतोऽयमाशय—यदहं पर्याप्तबादरजीवविषयमेवाल्पत्वबहुत्वं वदिष्यामि नापर्याप्तसूक्ष्मविषयमिति । इह संसारे सर्वजीवेभ्यः सर्वस्तोकाः गर्भजमनुष्यास्तेभ्योबादराग्नयः पर्याप्ताः असंख्येयगुणाधिकास्तेभ्यो वैमानिका देवा असंख्येयगुणाधिकास्तेभ्यो भवनवासिनो देवा असंख्येयगुणाधिकास्तेभ्यो नैरयिका असंख्येयगुणाधिकास्तेभ्योव्यन्तरा असंख्येयगुणाधिकास्तेभ्यो ज्योतिष्काः संख्येयगुणाधिकास्तेभ्यश्चतुरिन्द्रियाः पर्याप्ताः संख्येयगुणाधिकास्तेभ्यः संज्ञिनः पञ्चेन्द्रिया विशेषाधिकास्ततो द्वीन्द्रिया विशेषाधिकास्ततस्त्रीन्द्रिया विशेषाधिकास्तेभ्यः पृथवीकायिका जीवा असंख्यातगुणाधिकास्तेभ्योऽप्कायिका जीवा असंख्यगुणाधिकास्तेभ्यो वायुकायिका जीवा असंख्येयगुणाधिकास्तेभ्यो वनस्पतिकायिका जीवा अनन्तगुणा क्रमेण इमे पूर्वोक्तपदार्थाः अधिका अधिका भवन्ति, मनुष्यादिवनस्प-

त्यवसानान् शब्दान् प्रति प्रत्येकं भवन्तीति क्रिया प्रयोज्येत्यर्थः । अत्र चकारः समुच्चयार्थः । घण्टालालान्यायेन पूर्वमग्रतः सर्वत्र अधिका भवन्ति च इति ग्रहणीयम्,त्पबहुत्वद्वारं समाप्तम् । अथ गाथोत्तरार्धेन ( दण्डकभ्रान्ति दर्शयति- ) सर्वेऽपि च इमे पूर्वोक्ता भावाः पर्याप्तास्तेषु तेषु जीवस्थानेषु गमनागमनरूपाः हे जिना ! मया भवे भ्रमता अनन्तशोऽनन्तकृत्वः प्राप्ताः । यथा मया तथाऽन्यैरपि जीवैः । एतेन स्वामिनां पुरः स्वदुःखं निवेदितम् । अथ तद्विमोचनलक्षणां प्रार्थनामाह-सव्वेवि इमे भावे० हे जिना ! परमेष्ठिनो ! मया सर्वेऽपि इमे चतुर्विंशति दण्डकभावाः अनन्तशः प्राप्ताः अनन्तवारान् संप्राप्ता इत्यर्थः अनन्तवारान् अनन्तशः ॥ ४१ ॥ ४२ ॥

**संपइ तुम्ह भत्तस्स, दंडगपयभमणभग्गहियअस्स ।**
**दंडतियविरय(इ)सुलहं,लहुं मम दिंतु मुक्खपयं ॥४३**

( अव० ) हे जिना इति पदं पूर्वस्थितमिहापि गृह्यते । तेन हे जिनाः ! सम्प्रति इह भवे भवतां भक्तस्य त्रिकरणशुद्ध्या भक्तिमतः । दण्डकपदेषु सूक्ष्मबादरपर्याप्तापर्याप्तरूपेषु भ्रमणं पुनः पुनर्गत्यागतिरूपं तस्माद्भग्नं निवृत्तं हृदयं मनो यस्य एवंविधस्य मम विज्ञप्तिकर्तुः । दण्डत्रिकात् मनोवाक्कायानर्थप्रवृत्तिरूपाद्विरतानां सुलभं सुप्रापं दण्डत्रिकविरतसुलभं मोक्षपदं लघु शीघ्रं भवन्तो ददतु वितरन्तु ॥ ४३ ॥ ग्रन्थकारः स्वनाम कथयति-

टीका—सम्पइ तुम्हेति० हे जिना ! हे परमेष्ठिनो भवन्तः सम्प्रति शीघ्रं मम मोक्षपदं-शिवपदं ददतु दिशन्तु दिन्तु इति क्रियापदं भवन्त इति कर्तृपदमध्याहार्यं । अथवा प्राकृते हि मंत्रं विधयो विकल्प्यन्ते इतिवचनात् युष्मदर्थे अन्यपुरुषवचनप्रवृत्तिरित्यर्थः । कथम्भूतं ? मोक्षपदं दण्डत्रिकविरतिसुलभं दण्ड्यन्ते सर्वस्वापहारेण लुप्यन्ते जन्तवः प्राणिन एभिरिति दण्डाः मनोवाक्कायरूपा इत्यर्थस्तेषां त्रिकं दण्डत्रिकं

दण्डत्रिकस्य विरतिर्विरमणं दण्डत्रिकविरतिः दण्डकत्रिकविरत्या सुलभं सुप्रापं दण्डत्रिकविरतिसुलभं किंभूतस्य मम भक्तस्य-भक्तिमतः केषां? युष्माकं पुनः किंभूतस्य मम? दण्डकपदभ्रमणभग्नहृदयस्य दण्डकपदेषु सूक्ष्मबादरपर्याप्तापर्याप्तरूपेषु भ्रमणं पुनर्गत्यागतिरूपं तस्मात् भग्नहृदयस्य निवृत्तचित्तस्येत्यर्थः।दण्डकानां पदानि दण्डकपदानि दण्डकपदेषु भ्रमणं दण्डकपदभ्रमणं दण्डकपदभ्रमणात् भग्नं-निवृत्तं हृदयं-चित्तं यस्य स दण्डकपदभ्रमणभग्नहृदयस्तस्य दण्डकपदभ्रमणभग्नहृदयस्य इति गाथार्थः ॥ ४३ ॥

**सिरिजिणहंसमुणीसर-रज्जे सिरिधवलचंदसीसेणं ।**
**गजसारेणं लिहिया, एसा विन्नत्ति अप्पहिया ॥४४॥**

(अव०) श्रीजिनहंसमुनिनामानो ये श्रीजिनसमुद्रसूरिपट्टप्रतिष्ठिताः मुनीश्वराः खरतरगच्छाधिपतयः। तेषां राज्यं गच्छाधिपत्यलक्षणं तस्मिन् विजये सैद्धान्तिकशिरोमणीनां श्रीधवलचन्द्रगणीनां शिष्येण संविग्नपण्डिताभयोदयगणि लालितपालितेन गजसारगणिना नाम्ना साधुना। एषा विचारषट्त्रिंशिकारूपा श्रीतीर्थंकृतां विज्ञप्तिर्लिखितेतिपदेनौद्धत्यं परिहृतं। यद्वा पूर्वं यन्त्रपत्रतया लिखिता ततः सुगमतायै सूत्रतया गुम्फिता इत्यर्थः। किंभूता आत्महिता अनेन "न भवति हि धर्मः श्रोतुः, सर्वस्यैकान्ततो हितश्रवणात्। ब्रुवतोऽनुग्रहबुद्ध्या वक्तुस्त्वेकान्ततो भवति ॥ १ ॥" इति सूक्तं स्थापितम् ॥ ४४ ॥

निधिमुनिशरेन्दु(१५७९)संवल्लिपीकृता पत्तनेऽवचूर्णिरियम्।
संशोध्या धीमद्भिर्मत्वेदं बालचापल्यम् ॥ १ ॥

॥ श्रीगजसारमुनिप्रणिता स्वोपज्ञाऽवचूर्णिः समाप्ता ॥

टीका- सिरिजिणेति० हे जिनाः ! जिनहंसमुनीश्वरराज्ये गजसारेण एषा विचारषट्त्रिंशिकाकरणरूपा विज्ञप्तिर्लिखिता । किंभूतेन गजसारेण ?-श्रीधवलचन्द्रशिष्येण श्रिया युक्तो धवलचन्द्रः श्रीधवलचन्द्रस्तस्य शिष्यः श्रीधवलचन्द्रशिष्यस्तेन श्रीधवलचन्द्रशिष्येण, किंभूता विज्ञप्तिः ?-आत्महिता आत्मने हिता आत्महिता, परेषां बोधो भवतु वा मा भवतु परं वक्तुर्बोधो भवति, यदुक्तं-अस्तु वा माऽस्तु वा बोधः, परेषां कर्मयोगत । तथापि वक्तुर्महती, निर्जरा गदिता जिनैः ॥ १ ॥ ४४ ॥

## अथ टीकाकारप्रशस्तिः—

(आर्या) श्रीहीरविजयसूरीश्वरा बभूवुर्जगत्त्रयीविदिताः ।
तद्वाचका महोदयराजः श्रीभानुचन्द्राह्वाः ॥ १ ॥

जयन्तु ते वाचकभानुचन्द्रा, अभ्यस्तसद्वाङ्मयवीततन्द्राः ।
ये मानसे हंसतया बभूवुरकब्बरक्षोणिपतेस्तु भूते ॥ २ ॥

श्रीभानुचन्द्रामलपट्टचारुप्रासादशृङ्गार्जुनकुम्भकल्पाः ।
ते सन्तु चारूदयचन्द्रसन्तः, सुखापनाः सूरिकलालसन्तः ॥३॥

सर्व्यार्थसार्थाकृतिकामधेन्वाः, यस्य प्रासादाद गुणचक्रधाम्नः ।
षट्त्रिंशिकायाः किल रूपचन्द्रो,वृत्ति चकारोदयचन्द्रशिष्यः ४

संवत्शरर्ष्यङ्गनिशेश १६७८ वर्षे, ज्येष्टस्य कृष्णेतरचारुपक्षे ।
षष्ठ्यां तिथौ वाक्पतिर्यवारे,स्वस्यावबोधाय विनिर्मितेयम् ५

अनुष्टुभ- ग्रन्थाग्रगणितं सर्वं, संख्ययाऽत्र विनिश्चितम् ।
षट्त्रिंशदधिकं पञ्च, शतं जातमनुष्टुभाम् ॥ ६ ॥

॥ श्रीरूपचन्द्रमुनिप्रणिता वृत्तिः समाप्ता ॥

